* श्रीः *

जयपुर-राजकीय-पण्डितसभाप्रमुखमहामहोपदेशकमधुसूदन-
विद्यावाचस्पतिना प्रणीते वैदिकविज्ञानप्रकाशके
ब्रह्मविज्ञानप्रवेशिकालक्षणानां
षड्ग्रन्थानां मध्ये

प्रथमोऽयम्

# विज्ञानविद्युत्

अत्र "चतुष्टयं वा इदं सर्वम्"-इति निगमश्रुतिर्व्याख्यायते

श्रीनवलकिशोरकाङ्करेण संपाद्य

श्रीबालचन्द्रयन्त्रालये मुद्रयित्वा प्रकाशितः

( प्रथमावृत्तिः ) मूल्यम् १)। (सन् १९३९ ई०)

॥ श्रीतत्सत् ॥

# विज्ञानविद्युत्

विज्ञानविद्युत्संचारादज्ञानतिमिरात्ययः ॥
क्षणिकोऽपि सुखाय स्याद् वेदमार्गे विचारिणाम् ॥१॥
गहने ब्रह्मविज्ञाने प्रवेशायोपकारकः ॥
विज्ञानविद्युदुद्योतः कस्य न स्यात् सुखावहः ॥२॥

"एकं वा इदं वि बभूव सर्वम्"। "सर्वं खल्विदं ब्रह्म"। "एकमेवाद्वितीयं ब्रह्म"। "ऐतदात्म्यमिदं सर्वम्"-इत्यादिभ्यो मन्त्रब्राह्मणश्रुतिवचनेभ्यो ब्रह्मैवेदमेकमेव सन्नाना व्यपदिश्यते-इत्यवगम्यते। तत्र चेयमेकैका व्यक्तिः—"चतुष्टयं वा इदं सर्वम्" इति कौषीतकश्रुत्या चतुर्धा चतुर्धा कृत्वा विभक्ता भवति-पुरम्, पुरुषः, परात्परः, निर्विशेष-इति।

## चतुष्पाद्ब्रह्मणः पुरं प्रथमः पादः १

तथा हीदं सर्वं यावदिह किञ्चिद् बहिर्धा दृश्यते स सर्वोऽयं विकारसंघो भूतग्रामत्त्वादात्मग्रामत्त्वाच्च पुरमित्यभिधीयते। विकारकूटानामेषामात्मना विगृहीतत्त्वादात्मनो वैविध्येन ग्राहकत्त्वाच्चेदं पुरं विग्रह इत्युच्यते। तत्रैते विकारकूटास्त्रेधा विभज्यन्ते-

औपपादिकाः, औपसर्गिकाः, औपजातिकाश्चेति। तत्र दिग्-देशः-कालः-संख्या-परिमाणम्-पृथक्त्वम्-संयोगः-विभागः-परत्वम्-अपरत्वम्-इत्येते दशधर्माः केवलभातिसिद्धाः स्वत एवोपपद्यन्ते। तस्मादौपपादिका एते भावनामया उपनामाः औपनामिका वोच्यन्ते। अथ शुक्रशोणिते-अन्नजलौषधानि-पृथ्वीरसाः-अन्तरिक्षरसाः-सूर्यचन्द्रादिद्युरसाः-इतरसंसर्गजाश्च सर्वे धर्माः पार्ष्ठिकाः परतः स्वस्मिन् संसृष्टा उपसर्गा औपसर्गिका वोच्यन्ते। अथ प्रतिव्यक्ति स्वस्मादात्मन एव लोहकिट्टवज्जलफेनवद् दुग्धशरवत स्वभावत उत्पद्यमानाः कतिपये विकारा उपजना औपजनिका वोच्यन्ते। इत्थमेतेषां त्रिधा विभक्तानां विकाराणां संघः शरीरमित्युच्यते।

तच्च शरीरं पुरुषोपकरणतया बहिर्धाऽस्मिन् पुरुषे संसज्जते। स एष त्रिविधविकार-संघो ब्रह्मण एकः पादः ॥१॥

## पुरुषो द्वितीयः पादः २

इदमेव शरीरं पुरम्। तत् त्रिविधम्—आत्ममयम्, दैवतमयम्, भूतमयं चेति। त्रिष्वेतेष्वधिकरणेष्वन्तः प्रविष्टः प्राणविशेषः पुरवासित्वात् पुरुषो भवति। स त्रिविधः—क्षरः, अक्षरः, अव्ययश्च। एते त्रयः क्रमेण अवरः, परावरः, परः, इत्युच्यते। तत्र क्षरपुरुषः सर्वेषां विकारसंघानामुपादानकारणं भवति। स हि प्रभवप्रतिष्ठापरायणत्वाद् विकाराणामात्मा। सर्वे विकाराः क्षरपुरुषाधारेण तिष्ठन्ति। यथा घटो मृत्तिकायाम्, पटस्तन्तुषु, एवं क्षरपुरुषे विकाराः। तदन्तर्गतोऽक्षरपुरुषः। स हि सर्वेषां विकाराणां जनको निमित्तकारणम्। स हि कार्ये समन्वितोऽपि अविकुर्वाणस्तिष्ठति। ततोऽप्यन्तर्गतोऽव्ययपुरुषः। स च यद्यपि कार्यत्त्वकारणत्त्वाभ्यां शून्यो विशुद्ध आश्रयमात्रम्, तथापि चक्षुः—साध्यायां दृष्टौ सूर्यप्रतापादिवत् स्वरूपसत्कारणं भवत्येव। सोऽयं त्रिपुरुषभेदीऽयमात्मग्रामो ब्रह्मण एकः पाद ॥२॥

## परात्परस्तृतीयः पादः ३

अविनाभूतैरेभिस्त्रिभिः पुरुषैः कश्चिदेकः पुरुष उपपद्यते गूढोत्मा प्रजापतिर्नाम। मायाबलौपाधिकमात्रानिमितेऽव्ययपुरुषेऽक्षरपुरुषस्य, तत्र पुनः क्षरपुरुषस्य निगूढतया त्रयाणामप्यन्यूनानतिरिक्तैकायतनत्वेन प्रतिपन्नत्वात्।

स एष एक एवाविभक्तो गूढोत्मा पुरुषो विभक्तेषु तत्तद्भूतेषु प्रत्येकं परिव्याप्त्या तत्तदवच्छेदाद् विभक्तवत् स्थितः प्रतिव्यक्ति भिद्यते। अनन्ताश्चैते प्रतिव्यक्तिभिन्नास्त्रिपुरुषैकपुरुषरूपा योगमायोपाधिपरिच्छिन्नाः प्रजापतयः। तेषामनन्तानामुत्पद्योत्पद्य काले समवलीयमानानां प्रजापतीनामन्यः कश्चिदसीमो निरुपाधिकः प्रभवप्रतिष्ठापरायणभूतोऽवलम्बः सम्भाव्यते। अवश्यञ्चापां समुद्रे बुद्‌बुद्‌वत् सर्वेऽप्येते तत्तदुपाधि परिच्छिन्ना बलवन्तो भावाः कस्मिंश्चिदपरिच्छिन्ने बलसमुद्रे ब्रह्मण्यवलम्बन्ते। सोऽयं दिग्देशकालाद्यनवच्छिन्नः कश्चिदसीमो बलसमुद्रात्मा ब्रह्मभावः परात्पर इत्युच्यते।

क्षराक्षरपुरुषातिष्ठावत्वादव्ययः पुरुषेषु परो भावः। ततोऽप्ययमनवच्छिन्नो भावः परो भवति, अपरिच्छिन्नस्य सर्वपरिछिन्नातिष्ठावत्त्वोपपत्तेः। तस्मादनन्तबलसमुद्रोऽय-

मसीमो ब्रह्मभावः परात्पर इत्युच्यते । स चानन्तानन्तबलोत्थानविलयनाश्रयभूतो रसस्तादृशसर्वविधबलविशिष्टः प्रतिपत्तव्यः । विनश्वरस्वभावतया प्रतिक्षणोत्पन्न-विनष्टान्यपीमान्यशेषाणि भिन्नभिन्नलक्षणानि बलानि कस्मिंश्चिदेकस्मिन्नविनाशिनि रसे नित्यं संनिहितानि भवन्ति । तेन सर्वविधबलविशिष्टमेनं नित्यैकरसं परात्परभाव-मभयशब्देनाप्याहुः । सोयमेकोऽद्वितीयः परात्परो ब्रह्मण एकः पादः ॥३॥

## निर्विशेषस्तुरीयः पादः ४

यद्यपि रसबलयोरनयोरमृतमृत्युरूपयोर्मध्ये नैकमप्यन्येन विनाकृतं भवति, उभयोरयुतसिद्धत्वात् । तथापि यदि बुद्ध्या बलोपाधिकं विशुद्धं रसमात्रं पृथग् भाव्यते, तदा स रसो निर्विशेष इत्युच्यते । यथा परात्परः सर्वधर्मोपपन्नो ब्रह्मभाव आख्यातः, तथाऽयं तुरीयो निर्धर्मकः प्रतिपत्तव्यः । सचायं निर्विशेषः सर्वथैवाऽचिन्त्योऽपरिमेयोऽनिर्वचनीयश्च वेदे श्रूयते । तस्य निर्लक्षणतया विशिष्यज्ञानाभावादज्ञेयत्त्वात् । सामान्यतस्तु सत्तामात्रेण स सर्वविधविकारात्पृथगभूतः परिज्ञायत एव । सोऽयं निर्विशेषो विशुद्धैकरसो ब्रह्मणस्तुरीयः पादः ॥४॥ तदित्थं चतुष्पाद् ब्रह्म व्याख्यातम् ।

॥ इति पादचतुष्टयोद्योतः प्रथमः प्रकाशः ॥

१

---

## पुरुषत्रैविध्ये क्षरपुरुषनिरुक्तिः ५

क्षरपुरुषाश्रितोऽयं विकारसंघः शरीरमुच्यते-इत्युक्तम् । तच्च क्षरात्मकत्त्वात् क्षरपुरुषेऽन्तर्भूतमिति त्रिपुरुषान्नातिरिच्यते किञ्चित् । तथा चेदं पुरुषत्रयं पृथक्कृत्य व्याख्यायते ।

### क्षरपुरुषपाञ्चविध्यम्

तत्र तावदात्मन्यनुगम्यमानः क्षरपुरुषः पञ्चधा- कारणशरीरम्, [२]सूक्ष्मशरीरम्, [३]स्थूलशरीरम् । प्रजावर्गः, वित्तवर्गश्च । विद्या-अविद्या इति द्वे, अविद्यैव वा बलविशेषः [१]कारणशरीरम् । सर्वा इन्द्रियाधिष्ठातृदेवता शरीरे प्रवर्त्तमानाः अग्नि-वायु-सूर्य-भास्वरसोम-दिक्सोमाः सूक्ष्मशरीरम् । पृथिव्युपलानि पञ्च महाभूतानि सविकाराणि [३]स्थूलशरीरम् । शरीराद् बहिर्भूतानि तु योनिसम्बन्धानुग्रहणा-

न्नित्यसम्बद्धानि स्त्रीपुरुषादीनि चेतनानि ४प्रजाशब्देन विवक्ष्यन्ते। यानि तु कृत्रिमत्वादनित्यसम्बन्धानि परतः सङ्गृहीतानि भोग्यजातानि तानि ५वित्तशब्देन विवक्ष्यन्ते। तानि द्वेधा-अचेतनानि गृहवस्त्रादीनि, चेतनानि वा पुरुषाश्वगवाव्यजादिपशुरूपाणि। तदित्थं शरीरत्रयं प्रजा वित्तञ्चेति पञ्चलक्षणः क्षरपुरुषो व्याख्यातः।

## अक्षरपुरुषनिरुक्तिः ६

अथैतेषां क्षरपुरुषविकाराणां नियन्ता तेष्वेवानुस्यूतोऽक्षरपुरुषो भवति। सोऽपि पञ्चलक्षणो द्रष्टव्यः—१ब्रह्मा, २विष्णुः, ३इन्द्रः' ४अग्निः, ५सोमः, इति भेदात्। आद्यास्त्रयोऽक्षरा हृद्याः।अन्त्यौ द्वौ पृष्ठ्यौ।

### हृद्याक्षरत्रयविमर्शः

तत्र हृद्याक्षरत्रये प्रतिष्ठामयो ब्रह्मा। यज्ञमयो विष्णुः। वीर्यमय इन्द्रः। सङ्कोचमयः सोमः। विकासमयोऽग्निः। प्रतिष्ठातः स्थितिरात्मधृतिः पशुविधृतिश्च यज्ञतोऽर्वाग्गतिराकर्षणमशनाया च। अतिशक्तिभागुत्साहो वीर्यम्। वीर्यात्पराग्गतिर्विस्रंसनमुत्सादो नोदना च। अथ प्रतिष्ठासहितेयमर्वाग्गतिः सङ्कोचः। प्रतिष्ठासहिता च पराग्गतिर्विकासः। तेऽमी पञ्चाप्यक्षराः प्रतिव्यक्तिशरीरे नियम्यावस्थितास्तांस्तान् प्राणान् प्रयोजयन्ति। इन्द्रप्रयुक्तेनोत्क्षेपणप्राणेन कृशे बुभुक्षितेऽस्मिन् प्रजापतौ प्रत्युद्बुद्धः प्रवर्त्तमानः सन्नशनायाप्राणः प्रतिक्षणमन्यतोऽन्यतः किञ्चित् किञ्चित् परकीयान् रसान् स्वस्मिन्नाकर्षति। तांश्च रसानेष प्रजापतिः प्रतिष्ठाप्राणेनात्मनि प्रतिष्ठाप्य स्वीयां न्यूनतां परिपूरयति। अत एवोत्क्षेपणप्राणवशात् प्रतिक्षणमुत्क्षिप्तेऽपि शरीररसे शरीरं पूर्ववत् प्रतिष्ठितमवतिष्ठते। यत्र चेदमुत्क्षेपणमशनायावशादाकर्षणञ्च विनिमयेन भवतः स प्रतिष्ठाप्राणः। प्रतिष्ठाप्राणेन प्रतिष्ठिते शरीरे तावाकर्षणविक्षेपणप्राणौ स्वस्वव्यापारे प्रभवतः। यत्रापि शब्दादौ क्वचित् प्रतिष्ठाप्राणो न दृश्यते तत्रापि स्वल्पमात्रयाऽवश्यं प्रतिष्ठाप्राणोऽभ्युपगन्तव्यः। अन्यथा कस्मादिदं शब्दोत्क्रमणं सम्भवेत्। किन्तु यथा प्रदीपेऽर्चिषो रसस्योत्क्रमणेऽपि प्रतिक्षणं तैलाकर्षणात् प्रतिष्ठिता सैकरूपा दीपार्चिर्भवति, तथास्मिन् शब्दे प्रतिष्ठा न दृश्यते। एतेषामेव त्रयाणां प्राणानां मध्ये विक्षेपणाकर्षणयोर्न्यूनाधिकतारतम्याद् "बाल्य-तारुण्य-वार्द्धक्यानि"-अवस्थाविशेषाः सम्भवन्ति। बाल्ये शरीररसानामुत्क्षेपणं स्वल्पम्, रसाकर्षणन्तु अधिकम्, तस्माच्छरीरवृद्धिः। अथ यौवने-आकर्षणविक्षेपणे समाने भवत इति वृद्धि-

ह्रासौ न भवतः। वार्द्धक्येत्वाकर्षणमल्पम्, उत्क्षेपणमधिकम्। तस्माच्छरीररसानां ह्रासः। अथ प्रतिष्ठाप्राणस्योत्क्रमणे तु सा व्यक्तिर्म्रियते विनश्यति। तदित्थमेतेषामेव त्रयाणां प्राणानां परस्परं सहयोगात् प्रत्यभिघातात्प्रजननाच्चैतस्मिन् शरीरे जरामृत्यू, बुभुक्षापिपासे, शोकमोहौ चेति षडूर्मयः सम्भवन्तो दृश्यन्ते। एवं पृथिव्याः सूर्यस्य सम्पूर्णब्रह्माण्डस्य चोत्पत्तिस्थितिविनाशा द्रष्टव्याः। अन्ये च सर्वे विकारा एभ्य एव त्रिभ्योऽक्षरेभ्यः प्राणप्रदेभ्यः सम्भवन्ति। आकर्षणादुत्पत्तिः, प्रतिष्ठातः स्थितिः, विक्षेपणान्नाश इति।

अथ पृष्ठ्याक्षरद्वयमत्रैवान्वाभक्तं भवति। अग्निसोमाभ्यां ह्यन्येऽन्ये सर्वे परिवर्तनविकारा जायन्ते। तौ चाग्निसोमौ प्रतिष्ठाप्राणस्यैवोत्क्षेपणप्राणेन, आकर्षणप्राणेन च समायोगात् सम्पद्येते। उत्क्षिप्तः प्रतिष्ठितोऽक्षरविशेषोऽग्निरुच्यते। आकृष्टस्तु प्रतिष्ठितोऽक्षरविशेषः सोम इत्युच्यते। तथा चैते पञ्चाक्षरा अखिलजगन्नियन्तारो विश्वेश्वरा द्रष्टव्याः।

अथैतयोरग्निसोमयोरपि प्रतिष्ठाप्राणस्यैवावस्थाविशेषरूपतया त्रय एव प्राणा मुख्याः सिध्यन्ति। तत्र प्रतिष्ठाप्राणं ब्रह्माणमाहुः। आकर्षणप्राणं विष्णुमाहुः। उत्क्षेपणप्राणं त्विन्द्रमाहुः। एतमेवेन्द्रमग्निसोमाव्यभिचारिणं त्र्यक्षरभक्ताः पौराणिका अद्यत्वे शिवशब्देन व्यवहरन्ति, इन्द्रशिवयोर्भिन्नत्वेऽपि उभयो रोदसीदेवतत्त्वेन वृत्तिसाम्येन च नातिविशेषात्। वेदे तु सर्वत्रेन्द्रप्राणस्यैवोत्क्षेपणकर्तृत्वं ब्रह्मविष्णुसहचारित्वञ्च दृश्यते। वेदसिद्धान्तेऽपीश्वरस्यैकस्य वैविध्योपपत्तिरुत्तरत्र वक्ष्यते। इह तु "यदक्षरं पञ्चविधं समेती" ति श्रुत्या पञ्चाक्षरसंस्थाक्रमो द्रष्टव्यः।

ब्रह्मा-विष्णुः-इन्द्रः-इत्येते त्रयोऽक्षराः, अग्निः सोम इति द्वावक्षरौ चेतिकृत्वा पञ्चैव देवताः सिद्धाः। एभ्य एव पञ्चभ्यो दैवतेभ्यः सर्वमिदं जगद्यथायथमुत्पाद्यते, प्रतिष्ठाप्यते, उपसंह्रियते, विकारैश्चानेकविधैः संप्रचीयते-इत्यवगन्तव्यम्।

एष्वपि पञ्चाक्षरेषु ब्रह्मा मुख्यः। तदनुगतो विष्णिवन्द्रौ भवतः। विष्णिवन्द्रसहकारात् सिद्धं ब्रह्मण एव रूपान्तरमग्निश्च सोमश्च। विक्षेपणधर्मणा हीन्द्रेण विक्षिप्यमाणं शुद्धं वा विष्णुसयुग्वा ब्रह्मेदममृतत्वेनोपचर्यते। तथा हि—

"अर्द्धं वै प्रजापते रात्मनो मर्त्यमासीदर्द्धममृतम्" इति याज्ञवल्क्यादय प्रतिजानते। तत्र मर्त्यं स्थूलत्वान्नातिदूरं विक्षिप्यत इति यावदिदं ब्रह्म वितिष्ठिते तदस्य

मर्त्यस्य श्रायन्तीयं साम तच्छरीरमुच्यते । अतः परं परितो वारवन्तीयम् । अमृतं तु सूक्ष्मतमं वितायमानं पराः परावतो वितिष्ठते तद् ब्रह्मसाम पारावतम् । सा खल्वव्ययपुरुषस्य वाचः परा काष्ठा, "यावद् ब्रह्म विष्ठितं तावती वाक्" इति श्रुतेः । सोऽयमष्टाचत्वारिंशः स्तोमः । अथ ब्रह्म प्रतिष्ठितोऽयं विष्णुरिन्द्रेण विद्विप्यमाणस्त्रीन् विक्रमान् विक्रमते त्रीन् स्तोमान्-त्रिवृतं पञ्चदशमेकविंशं चेति । त्रयस्ते स्तोमास्त्रयोऽग्नयोऽमृताः सम्पद्यन्ते । तत्र विष्ण्वच्छिन्नं ब्रह्मैव च विष्णुविक्रमणाद् वितायमानं सदेतदमृताग्निरूपेण परिणमते । तदिदमेकविंशं यावदग्निष्टोमसाम वारवन्तीयं नाम । सर्वाणि भूतानि मर्त्योग्निः शरीरं वा त्रिवृतं वा यावत् । सर्वा देवता अमृताग्निरेकविंशं यावत् । अमृताग्नेरूर्ध्वो ब्रह्मामृतभागस्त्रयस्त्रिंशस्तोमान्तः सोमः । तदित्थं पञ्चात्तरा इमे पञ्च प्राणाः सिद्धाः ॥ ॥५॥

तत्र ब्रह्मेन्द्रविष्णवो हृदयदहरस्थाः प्राणविशेषाः । अग्निस्तु स द्विविधः । शरीरमात्रो भूतमयो मर्त्योऽयमन्यः । अथामृतो देवमयोऽयमन्यः । स च शरीरस्थः शरीराद् बहिस्थश्च । उभयविधोऽप्ययमग्निः पिण्डान्तस्थः कुतश्चिन्नाभेरग्रगमनस्वभावोऽनवरतं पिण्डतो बहिर्गन्तुं प्रक्रमते । सोमस्तु सर्वतो दिग्भ्यः सूयमानः प्रतिपिण्डं बहिः प्रदेशे तिष्ठन्-अनवरतं शरीरस्यास्य दहरविवरे प्रवेष्टुं प्रवर्त्तते ।

इह हि ब्रह्मणो वाङ्मयत्वादुत्क्रामकेन्द्रकर्मणोत्क्रमितो ब्रह्मवितानोऽपि नूनं वागेव स्यात् । सेयं वाग् ब्रह्मणः स्थानात् पिण्डान्तर्दहरहृदयाद् यावद्दूरं बहिर्धा वितायते, तावतः प्रदेशस्याष्टाचत्वारिंशद्विभागाः कल्प्याः । तत्र ये त्रयस्त्रिंशद्विभागास्तान्यहाहानि । ये त्वह्नां विभाजकावच्छेदास्ता रात्रयः । इत्थमहोरात्ररूपा एते विभागा इष्यन्ते । अहोरात्रसन्धयस्तु विष्णुसंज्ञाः सामवेदे निरुक्ताः । तत्र मर्त्यैतृपिण्डपर्यन्तं शरीरम्, तत्र मर्त्योग्निः संसृज्यते । शरीरपृष्ठसंसक्तात्तु भागत्रयादूर्ध्वैः पञ्चभिः षट्कैः पञ्च स्तोमाः प्रभवन्ति । आद्यं तु भागत्रयमेकः स्तोमः । तस्मादूर्ध्वं प्रथमषट्कयोगे त्रिवृत्स्तोमः । ततो द्वितीषटकयोगे पञ्चदशस्तोमः । ततस्तृतीयषट्कयोगे एकविंशस्तोमः । ततश्चतुर्थषट्कयोगे त्रिणवः स्तोमः । ततः पञ्चमषट्कयोगे त्रयस्त्रिंशःस्तोमः। इत्थं पञ्च स्तोमाः सिद्धयन्ति । तत्र एकविंशस्तोमपर्यन्तममृताग्निभागः पर्यवसीदति । तदूर्ध्वं द्वौ स्तोमौ सोमभागः । तदित्थमिदमग्नीसोमात्मकमहोरात्रं जगत् ।

तत्र त्रिवृत्पञ्चदशैकविंशभेदादग्निस्त्रेधा विभज्यते-अग्निश्च वायुश्च आदित्यश्च । तदूर्ध्वं स्तोमद्वयभेदात् सोमो द्वेधा विभज्यते -ब्रह्मणस्पतिसोमः, दिक्सोमश्च ।

तदित्थमग्निभेदत्रय-सोमभेदद्वयभेदात् पञ्चदेवताः संपद्यन्ते-अग्निवायुसूर्याः, भास्वरसोम-दिक्सोमौ च। तत्र द्वावपि सोमौ-अग्नित्रये नित्यं हूयेते। ततोऽग्निः सूर्ये वा पृथिव्यां वा, अस्माकं शरीरेषु वा नित्यं प्रज्वलितस्तिष्ठति। सोऽयं यज्ञः प्रतिव्यक्तिजीवनहेतुर्द्रष्टव्यः। सह यज्ञाः सर्वाः प्रजाः प्रजापतिना सृष्टाः सन्ति। यस्या व्यक्तेः स्वयज्ञो नश्यति, सा व्यक्तिर्म्रियते विनश्यति। तत्रापि अग्निमयभागे पुनरन्ये त्रयस्त्रिंशद् देवा इष्यन्ते। त्रिवृत्स्तोमेऽष्टौ वसवः, पञ्चदशस्तोमे एकादश रुद्राः, एकविंशस्तोमे द्वादशादित्याः-इत्थमेकत्रिंशत्।

अथ पृथिव्यन्तरिक्षयोरन्तरिक्षदिवोश्चेति द्वौ सन्धी त्रयस्त्रिंशौ। अथवा द्यावापृथिव्यौ त्रयस्त्रिंश्यौ। अथवा अश्विनौ त्रयस्त्रिंशौ। अथवा पृथवीगर्भस्थः प्रजापतिः, द्युगर्भस्थ इन्द्र इत्येतौ त्रयस्त्रिंशौ। अथवा प्रजापतिवषट्कारौ त्रयस्त्रिंशौ। नातिविशेषा इमे पक्षाः। तत्र नाभेः प्रधिपर्यन्तं विषूचीना वाक् वषट्कारः। तस्य त्रयस्त्रिंशत्स्तोमात्मकत्वादस्य वषट्कारस्य यदुद्गीथरूपं हृदयं भवति, स सप्तदशः प्रजापतिः। वषट्कारस्य वाग्वितानरूपतया वितानस्येन्द्रधर्मतया चेन्द्रत्वमन्ये इच्छन्ति। इत्थमेते त्रयस्त्रिंशद् यज्ञिया देवा उच्यन्ते। तदित्थमग्निः सर्वा देवताः सिद्ध्यन्ति। अथ सोमाहुत्यैव-अग्निरूपसिद्धेः सामः सर्वा देवता इत्यपि सिद्धम्। इत्थमग्नीषोमौ व्याख्यातौ।

## पञ्चात्तरविवर्त्ताः-वेद-यज्ञ-प्रजा-लोक-धर्म्माः १०

एषु च पञ्चात्तरेषु ब्रह्मा वेदमयः, विष्णुर्यज्ञमयः, इन्द्रः प्रजामयः, अग्निर्लोकमयः, सोमो धर्ममयः प्रतिपद्यते। एषामेव वेद-यज्ञ-प्रजा-लोक-धर्माणां संघरूपेयमेकैका व्यक्तिः प्रतिभाति। तत्र ऋक्-साम-यजूंषि, अथर्वा चेत्येते चत्वारो वेदाः।

तत्राग्निमयपिण्डहृदयात् प्रवर्त्तमाना एकविंशस्तोमान्तं पिण्डविस्रंसनलक्षणेन वितानेन वितायमाना अन्नादाग्निसमुचिता वागेव ऋगूपम्। * तस्या अग्निः प्रभवः। अन्नादाग्निसमुचितवागग्निरेवास्या रूपम्। आदित्यतः प्रत्यावर्त्तमाना ब्रह्मणि सो-

*ऋचो मूर्तित्त्वात, मूर्तेः पिण्डत्त्वात्, पिण्डस्य चान्नादाग्निमयत्त्वात्।

माहुतिमाहावयमाना प्राणाग्निसमुचिता वागेव सामरूपम्‡। तस्या आदित्यः प्रभवः×। आदित्य एवास्या रूपम्*। अनयोश्च ऋक्सामयोरन्तरतश्चर-स्थिरभेदाद् द्वेधा विभक्ता या वाक् सा यजुः। तत्र यो गतिमान् भावः स वायुर्यन्नाम। यः स्थितिमान् भावः स आकाशो जू नाम। वायुश्च आकाशश्च परस्परतः सन्धीयेते-सा वाक् यज्जूः सती परोक्षतया यजुरित्युच्यते। इतो यजुष एव वाय्वाकाशरूपात् सर्वे यज्ञाः, सर्वाः प्रजाः, सर्वे लोकाः, सर्वे धर्माश्चोत्पद्यन्ते।

शान्तक्षुब्धभेदाद् द्वेधा विभक्तो यजुर्वेद एवैतेषां यज्ञप्रजालोकधर्माणां प्रभवः प्रतिष्ठा परायणञ्च। त एते त्रयो वेदा अग्निवाय्वादित्यरूपा अग्निमया एवेष्यन्ते। अग्निमयत्त्वमेव चैतस्या वेदत्रय्याः साधर्म्यम्। अत एव चैषा त्रयी सोममयाथर्ववेदात् पृथगध्यवसीयते। एकविंशस्तोमादूर्ध्वं त्रयस्त्रिंशस्तोमपर्यन्तं सोममयी वागेवाऽथर्ववेद इत्यथर्ववेदे गोपथब्राह्मणे निरूपितम्। एते चत्वारो वेदा वाङ्मया ब्रह्मणो रूपं भवति। एभिरेव चतुर्भिर्वेदैरियमेकैका व्यक्तिः प्रतिष्ठां लभते। प्रतिष्ठितायां व्यक्तावस्तीति बुद्धिर्भवति। अतएवोक्तं वेदे—

"ब्रह्मास्य सर्वस्य प्रतिष्ठा" (शत० ६।१।८)। "सर्वाणीमानि भूतानि त्रय्यां वाव प्रतिष्ठितानि" (शत० १०।४।२।२२) इति च। ऋक्सामयोर्यजुषोऽथर्वणश्चेत्येतेषां वेदविशेषाणां रूपमन्यत्र विस्तरतो व्याख्यातं द्रष्टव्यम्।

एभिरेव च वेदैर्यज्ञस्वरूपं सम्पद्यते। तत्र च ब्रह्मणस्तावत् त्रैविध्यं भवति-उक्थम्, अर्कः, अशितिश्च। तत्र उक्थं ब्रह्मणो वाङ्मयस्य हृद्ग्रन्थिमयो रूपविशेषः। यतोऽर्क उत्तिष्ठते तदुक्थं भूमिविशेषः। तत उत्थितो योऽन्नमत्तुमर्चंश्चरति सोऽर्को नाम। सोऽयमन्नादः प्राणाऽन्नमभिप्रवर्तमानो यतस्ततः स्वामशितिं बलात् परिगृह्णन् आत्मन्यागत्य शान्तो भवति। अशितिरन्नम्। तदन्नमर्कप्राणे प्रविशत् सदर्कं सम्पद्यते। ऊर्क् च रसः। स पश्चादर्कप्राणो भूत्वा स्वरूपतश्च्यवते। प्राणश्चोक्थे विलीयते-इत्ये-

‡साम्नः सप्तमस्यावयवस्य निधनस्योद्दचस्थानतया तत्र पिण्डोच्छेदादन्नादाग्निसोमोपसंहारात्।

×अथ साम्नस्तेजो लक्षणत्वात्, तेजसो विरलातिसूक्ष्मावयवत्वेनान्तःप्रवेशितया प्राणाग्निमयत्वात्।

*प्राणाग्निसमुचितवागग्नेरेवादित्यरूपेणोत्पत्तेः प्राणाग्निवागग्नियोगस्यादित्यरूपानुविधायित्वमुपपद्यते।

षः क्रमः सर्वत्रानवरतमनुवर्तनानो भवति। तत्रायमन्नोर्कप्राणानामन्योऽन्यपरिग्रहो यज्ञ इति यजुर्वेदे वाजसनेयब्राह्मणे निरूपितम्। तदित्थं ब्रह्मणि प्रवर्तमानो यज्ञ एवायं विष्णुनामाऽख्यायते। एष यज्ञमयो विष्णुरेव प्रतिष्ठमानानां सर्वेषां जीवनरूपा स्थितिर्भवति। यावदयमात्मयज्ञस्तावदेवायं पुरुषो जीवँस्तिष्ठति, यज्ञविनाशे सर्वो म्रियते विनश्यति। सोऽयं यज्ञोऽन्नादप्राणः।

अथ ब्रह्मणि यज्ञवशादुत्पद्यमाना यजुर्वेदविकारभूताः सर्वेऽप्यर्थाः प्रजा उच्यन्ते। ताश्च प्रजास्त्रेधा–बीजम, देवाः, भूतानि च। आकाशवायुतेजोजलपृथिव्यः पञ्चभूतानि। अग्निवाय्वादित्य–चन्द्रवरुण–नामानोऽग्नित्रय–सोमद्वयरूपविशेषाः पञ्चदेवाः। एवमविद्या, अस्मिता, रागद्वेषौ, अभिनिवेश इति पञ्चक्लेशाः कर्म्मजन्यानि भोग बीजानि। पञ्चबीजमयं कारणशरीरम्। पञ्चदेवमयं सूक्ष्मशरीम्। पञ्चभूतमयं स्थूलशरीरम्। इत्थमेताः पञ्चदशकला इन्द्रमात्मानं षोडशिनमावृत्य परितस्तिष्ठन्ति। ता एता इन्द्रस्य प्रजा भवन्ति। आभिरेव प्रजाभिः कृते भोगायतने शरीरे परिच्याप्य तिष्ठन्नयमिन्द्रः स्वैरिन्द्रियैः सर्वान् भोगानुपभुङ्क्ते। सोऽयमिन्द्रः प्रजामयः।

ता एताः प्रजा यं भावमुपेत्य संहता अपूर्वैर्नामरूपकर्मभिः संपन्नतमा लोक्यन्ते स एतासां लोको नामाख्यायते। स विविधभुवनं च जनश्चेति। भूः–भुवः–स्वः–महः–जनः–तपः–सत्यम्–इति सप्तैतानि भुवनानि। पृथ्वी–अन्तरिक्षं–द्यौः–इति त्रीणि भुवनानि। अथ मनः–प्राणः–वाक्–वायुः–तेजः–आपः–अन्नम्–इति संचरक्रमे सप्त जनाः। अन्नम्–आपः–तेजः–वायुः–वाक्–प्राणः–मनः–इति प्रतिसंचरकमे सप्त जनाः। तेऽमी सप्तलोका भाव्याः। सर्वाणि भूतान्येषामेवान्यतमे कस्मिंश्चिदे भावे लोक्यन्ते। जीवलोकः–देवलोकः–पितृलोक इत्येते त्रयो लोकाः। इयमेव पृथ्वी जीवलोकः। एष सूर्यो देवलोकः। एष चन्द्रमाः पितृलोकः। एषामेवान्यतमे देशविभागे क्वचिदयमात्माप्रचरन्नुपपद्यते, नातोऽन्यत्र तिष्ठति वा गच्छति वा। अपि च नक्तं दृष्टा चन्द्रिका दिवापि सतिचन्द्रे सम्भाव्यते, किन्तुनोपलभ्यते। न वा चन्द्रिकया सूर्यज्योतिषि कश्चिद्विशेष आधीयते, सूर्य्यज्योतिषः शुक्लपक्षे कृष्णपक्षे चाविशेषेण दृष्टत्वात्। तस्मादेषा चन्द्रिका सूर्यज्योतिषाऽभिभूयमाना सूर्यज्योतिरूपे परिवर्तते, इति लोकान्तरीभावा उपचर्य्यते। तथा चाहुः–"अग्नेर्धूम एव दिवा दृश्यते नार्चिः। अर्चिरेव नक्तं दृश्यते न धूम" इति। सोऽयं भावानामवस्थापरिणामो लोकाल्लोकान्तरे गमनमुपपद्यते। तस्य तथाऽवस्थाया विलोक्यमानत्वात् अद्भिश्चैते सर्वे लोका अन्यथाऽ-

न्यथा नामरूपा जायन्ते । तेषु सर्वेषु लोकेषूपस्थितमग्निमेवान्यथान्यथा पश्यन्तीति पशुरयमग्निः। लोकावस्थानभेदाच्चैतस्य पाशुकस्याग्नेरियमनेकधा भिन्नाऽवस्था दृश्यते। तथा चायमग्निर्लोकमयो व्याख्यातः।

एभ्योऽतिरिक्तानि यायन्ति वीर्याणि प्रजासु लोकेषु दृश्यन्ते, यैर्वीर्यैरेषामिन्द्रिय-ग्राह्यतोपपद्यते, ते सर्वे धर्माः प्रजारूपाः । चतुर्विधो हि भावो धर्मभेदाच्चोपपद्यते-दिव्य-भावाः, वीरभावाः, पशुभावाः, मृतभावाश्चेति भेदात्। एषामेव चतुर्णां भावानामुत्पा-दकाः प्राणविशेषा वीर्याणि । तानि चतुर्धा ब्रह्म-क्षत्र-विट-शूद्रश्चेति। यतः शान्तिलक्षणो दिव्यो भावः सम्पद्यते तदिदं ब्रह्म । यत उत्साहलक्षणो वीरभावस्तत् क्षत्रम् । अध्या-त्मगौरवं पूर्णं भवतीति तत्सत्वं शरण्यं सम्पद्यते, आश्रितानापद्भ्यस्त्रायते । अथ यतः पशुभावः, यत्रात्मगौरववहीना शान्तिः, येन वा आत्मानमापद्भ्यस्त्रातुमसमर्थः परात्मानमाश्रयते तद् वीर्यं विट्। सर्ववीर्यस्तम्भनलक्षणम्, सर्ववीर्यानुद्बोधलक्षणं वा-मृतवीर्यम् । पूर्वैस्त्रिभिर्वीर्यैः सत्वं धृतिमद् भवति । मृत वीर्यंतु सत्वं धृतेश्च्यवते, भयकातरतयाऽतिसामान्यतोऽपि वीर्यादुद्विजते, आशु द्रवति, तच्छूद्रम् । क्षुद्रवीर्य्यः प्राणी शूद्रः । परे त्वाहुः यदेव किञ्चिच्छान्तं रूपम्, यत्र वा ज्ञानं क्रिया अर्थश्च प्रसन्न-रूपा उपपद्यन्ते, तद् ब्रह्मवीर्यम् । यत्तु परिक्षुब्धं रूपम्, यत्र वा ज्ञानं, क्रिया, अर्थश्च विक्लिष्टाः परान् प्रत्याक्रममाणा उपपद्यन्ते, निग्रहानुग्रहाभ्यां परानात्मन्याधत्ते, तत क्षत्रवीर्य्यम् । अथ यच्छान्तं समृद्धं रूपम्, यत्र वा ज्ञान क्रिया-अर्थश्चावरोह्यमाणा विशन्तः प्रतिभान्ति तद् विड्वीर्यम् । एतच्च वीर्य्यत्रयमग्निवाय्वादित्यैरग्निविशेषैः कृतछन्दस्कं भवति । छन्दितत्त्वाच्च समर्यादीनि तानि त्रीणि वीर्याणि सम्यगाहितानि भवन्ति, न प्रच्यवन्ते, न पतन्ति ।

यत्र तु अच्छन्दस्कतया मर्यादाराहित्यं तत्रैतानि त्रीणि वीर्याणि सहसा सामा-न्येभ्य एव हेतुभ्यः प्रच्यवमानानि भवन्ति । एतान्येव विद्यमानान्यपि दौर्बल्यान्न विशिष्य कार्यकारीणि भवन्ति. तच्छौद्रं वीर्यम् ।

शु- इति आशुशब्दः शीघ्रार्थः, उदिति निपात उत्कृष्टार्थः, द्र इति द्रवणार्थो निद्रा-र्थश्च । तेन यः शीघ्रमधिकं द्रवति, भयाद्विह्वलो भवति, अथवा निद्राति, आलस्याद-कर्मण्यो भवति, यत्र वीर्यत्रयं भवदपि नोल्वणं दृश्यते तच्छौद्रं वीर्यम् ।

एतान्येव चत्त्वारि वीर्याणि चत्त्वारो धर्मा भवन्ति। एतैरेव चतुर्भिर्धर्म्मैः परिव्या-

प्रमिदं सर्वं पृथक् पृथग् विशिष्यते। एकस्मादन्यद् भोग्यं भवति, भोक्ता वा-इत्यनुसन्धेयम्।

तदित्थं सर्वजगत्स्वरूपनिर्वाहका वेद-यज्ञ-प्रजा-लोक-धर्मा एवैते चत्त्वारो भावाः क्रमेण ब्रह्मा, विष्णु, इन्द्रः, अग्निः, सोमः-इत्येते पंचदेवाः पञ्चाक्षरपुरुषा वा संज्ञया व्याख्याताः।

## अव्ययपुरुषनिरुक्तिः

उक्तं पूर्वं क्षरपुरुषः परिणामिकारणम्, अक्षरपुरुषो निमित्तकारणम्, ताभ्यां यदन्यत्सोऽव्ययः पुरुषो न कार्यं न कारणमिति। यद्यप्येवमस्मिन्नव्ययपुरुषे कारणत्त्वं निषिध्येते, तथापि प्रकारान्तरेणाऽस्याव्ययपुरुषस्यैव सर्वकारणत्त्वं प्रत्येतव्यम्। भगवद्गीतायामव्ययस्यैव सर्वजगत्कारणत्त्वप्रतिपादनात्। द्विविधं हि कारणत्त्वं भवति-कार्योपधायकतालक्षणं स्वरूपसद्योग्यतालक्षणं चेति। तत्राद्यं यद्यपि क्षराक्षरपुरुषयोरेवास्ति, क्षरस्य समवायिकारणत्त्वात्, अक्षरस्य निमित्तकारणत्वाच्च। स्वरूपसद्योग्यतालक्षणं तु कारणत्त्वमव्ययस्याप्यस्त्येव। यथा हि दर्शनलक्षणे कार्ये चक्षुरेव कारणं न तु सूर्यदीपादिकं पश्यति। किन्तु यावता सूर्यप्रकाशेन दीपकप्रकाशेन वा चक्षुर्न संयुज्यते तावता चक्षुषो दृष्टि-कार्योपधांयकत्वं नोपपद्यते। तस्मात् प्रकाशहेतुः सूर्यदीपादिः स्वरूपतः सन्नेव चक्षुषः कार्ये निर्व्यापारं कारणम्। एवमव्ययपुरुषोऽपि स्वातन्त्र्येण स्वरूपतः पृथक् सन्नेव तदक्षरकार्ये निर्व्यापारं कारणं भवति। ये तु सूर्यदीपादीनां चक्षुषि सहकारिकारणत्त्वमाचक्षते, ये वा सामग्र्या कारणत्त्वमभिप्रयन्तः कारणताया व्यासज्यवृत्तित्त्वमाचक्षते तेषामुभयेषामपि सामग्रीघटकानेकद्रव्येषु यथा कारणतासमर्पकत्त्वलक्षणं विलक्षणं कारणत्त्वमभिप्रेयते तथैव तस्मिन्नव्ययपुरुषेप्यभ्युपपद्यत एव।

"तत्तु समन्वयादि" ति भिक्षुसूत्रे समन्वयलक्षणायाः कारणताया अभियुक्तैराख्यातत्वात्। दृश्यते हि—प्रकाशसमन्वितचक्षुष इव अव्ययपुरुषसमन्वितस्यैवाक्षरपुरुषस्य सर्वस्मिन् कार्यजनने सामर्थ्यलाभः। तस्मात् सिद्धम्-अकारणस्याप्येतस्याव्ययपुरुषस्य सामान्यतः कारणत्त्वम्। किन्तु सत्यप्येवं कारणत्त्वे तस्याव्ययस्य विक्रियमाणत्त्वं नास्तीति परिणाम्युपादानत्वं प्रतिषिध्यते। तथा चाह भगवान् गीतायाम्—'सर्वकर्तारमपि मां विद्ध्यकर्तारमव्ययम्" इति।

अत एव च "न तस्य कार्य्यं करणञ्च विद्यते" इत्येवमादिरूपा कारणत्व-प्रतिषेधिका श्रुतिरपि न विरुध्यत इति बोध्यम्।

अयं चाव्ययपुरुषः परात्परस्यैव रूपान्तरत्वेन तदभेदेन च प्रतिपत्तव्यः। एतावाँस्तु विशेषः-सर्वबलविशिष्टो हि रसः परात्पर इत्याख्याते। तत्र बलानामानन्त्येऽपि यत्तावदेकं मायानामकं बलं सर्वेतरबलापेक्षया समधिकविशालं भवति तावता परिच्छिन्नो रसो रसान्तरात् पृथक्त्वेन भावित एवाव्ययपुरुषो नामोच्यते। अमितस्य मितत्त्वं यतः सम्पद्यते सा माया। बलोपहितो रसो वा, सर्वबलविशिष्टो रसो वा यद्यपि दिग्देशकालानवच्छिन्नत्वादमितोऽवधार्यते, किन्तु बलावच्छिन्नत्वे ततः परिमितवत् क्रियते। तस्मिन् मितिकरणे मायाबले सर्वाण्यन्यानि बलान्युत्पद्यन्ते, प्रतितिष्ठन्ति, विलीयन्ते च। तस्मादयमव्ययपुरुषोऽपि परात्परेणाभिन्नत्वात् सर्वबलवैशिष्ट्याच्च परात्परवत् सर्वधर्मोपपन्नो द्रष्टव्यः। अत एवायमव्ययोऽप्युपनिषदि सर्वधर्मा, सर्वकर्मा सर्वरसः, सर्वगुणः, इत्यादिभिः शब्दैर्भूयसाऽनुव्याख्यायते।

## अव्ययस्य पञ्चधातुकत्त्वम्

सोऽव्ययपुरुषः पञ्च कलो विज्ञायते। तथा हि—तस्मिन्नव्यये-अन्तश्चिति-बहिश्चितिभेदाद् द्वेधा बलानां चितिर्भवति। मायाबलस्य परिच्छिन्नत्वात् तस्य हृदये बलानामनेकेषां परस्परबन्धनेन ग्रन्थीभावश्चितिः। तत्रैतानि बलानि द्विविधानि। बलग्रन्थौ पुनर्बलान्तरग्रन्थिर्ग्रन्थिमत्बलानां पुनर्ग्रन्थिरित्येवं सृष्टिलक्षणानि अविद्याबलान्यन्यानि। हृद्ग्रन्थीनामनेकेषां मध्यात् कतिपयहृद्ग्रन्थिविमोकहेतुभूतानि तु विद्याबलान्यन्यानि। तत्राविद्याबलसञ्चयो बहिश्चितिः, विद्याबलसञ्चयस्त्वन्तश्चितिः। यत्र चेदं बलमन्ततर्बहिर्वा चीयते तदव्ययं मन इत्याख्ययते।

"मनो वा एतद्यदपरिमितम्। प्रजापतिर्वै मनः" ( कौ० ब्रा० २६।३ ) इति हि कौषीतकश्रुतिरस्य मनसः प्राधान्यमाचष्टे। तस्मिन् मनस्यन्तश्चित्या विद्यावरणाविद्योच्छेदादात्मज्योतिष उदयाद् विज्ञानं नाम रूपं जायते, ततोऽप्यन्तश्चित्या तदशेषावरणबलोच्छेदाद् रसमात्रप्राधान्ये आनन्दो नाम रूपं भवति। एवं मनसि बहिर्धा बलानां चयने तदात्मज्योतिरावरणे वीर्य्यलक्षणं प्राणो नाम रूप जायते। ततोऽपि बहिर्धा बलानां चयने अर्थलक्षणं वाग् नाम रूपं भवति। बहिर्धा चयने बलानामुत्तरोत्तरं ग्रन्थयो जायन्ते। तेन स्थूलं स्थूलं रूपं जायते। मनसोऽपेक्षया प्राणः स्थूलः।

ततोऽप्यधिकं वाक् स्थूला । अथान्तश्चितौ तु व्यवच्छेदकबलानां ग्रन्थय उद्भेदिता भूत्वा संसर्जकबलोद्भेदलक्षणमुदबन्धनं भवतीति क्रमेण बलानामुच्छेदनाद् रसरूपं विकसितं भवति । तथा च प्रथमो रसविकासो विज्ञानं नाम । ततोऽप्यधिकरसविकासे आनन्दो नाम रूपं जायते । तेन मनसोऽप्यपेक्षया विज्ञानं सूक्ष्मम्, ततोऽप्यधिकसूक्ष्मोऽयमानन्दः । यत्र यत्र यावद् बलं न्यूनं भवति तावत् सूक्ष्मताप्यधिका भवति । अथैतद्विपर्य्ययेण यावद् बलमुत्तरोत्तरमधिकं भवति तावत् स्थूलताऽपि क्रमेण वर्द्धते । तथा च सूक्ष्मस्थूलभेदादव्ययेऽस्मिन् पञ्चरूपाणि सम्पद्यन्ते-आनन्दः, विज्ञानम् , मनः, प्राणः, वाक् चेति । तत्रायमानन्दः सर्वाधिकसूक्ष्मो विज्ञायते । अपि च बलानामत्यन्तन्यूनतया स आनन्दो रसप्रधानः । वाक् तु बलाधिकवर्द्धनादतिस्थूला बलप्रधाना च । तत्र बलाधिक्याद् रसरूपं संवृतमिव निरानन्द भवति । मनस्तु नातिसूक्ष्मं नातिस्थूलं मध्यमं रूपं ज्ञानकर्मोभयलक्षणमिच्छामयं भवति । तदित्थमानन्दादिवागन्तविभागभेदात् पञ्चधातुकोऽयमव्ययपुरुषः सिद्धो भवति ।

## अव्ययस्य सृष्टिसाक्षित्वमुक्तिसाक्षित्वविवेकः

एषु पञ्चस्वव्ययधातुषु उत्तराभ्यां प्राणवाग्भ्यां सहितं मनः संसाराय हेतुर्भवति । तत्र प्राणवाग्भ्यां जगदुत्पादने विज्ञानानन्दौ सहकारिणौ भवतः । विज्ञानेनानन्देन च सहकृतं मनो वाचि भिन्नभिन्नविधान् प्राणान् सन्निवेश्य नानाविधान् भावानुत्पादयति । अथ विज्ञानानन्दाभ्यां सहितं मनो निस्ताराय हेतुर्भवति । तत्र विज्ञानानन्देन च हृद्ग्रन्थिमोक्षणेन बलानामुद्बन्धनेन च जगतो मोक्षसाधने प्राणवाचौ सहकारिकारणे भवतः । न प्राणेन वाचा वा विना कस्य चिदात्मनो मोक्षः सम्पद्यते । तदित्थं प्राणवाग्भ्यां जगतः संसाराय, आनन्दविज्ञानाभ्यां जगतो निस्ताराय च मन एवैकं प्रयोजकं भवति । अत एवाहुरभियुक्ताः—

न देहो न च जीवात्मा नेन्द्रियाणि परन्तप !<br>
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ॥ इति ॥

इत्थं चानन्दः, विज्ञानम् , मनः, प्राणः, वाक् , इत्येवं पञ्चधातुकोऽयमव्ययपुरुषः संसारनिस्तारयोर्मुख्यहेतुरिति प्रतिपत्तव्यम् ।

इति पुरुषत्रयोद्द्योतो द्वितीयः प्रकाशः ॥ २ ॥

## अव्ययस्याधिकरणत्रयानुगतौ तावदधिदैवतनिरुक्तिः

एष चाव्ययपुरुषोऽधिकरणभेदेन त्रेधा द्रष्टव्यः-अधिदैवतम्, अध्यात्मम्, अधिभूतञ्चेति। तत्राधिदैवतमीश्वरशरीरम्। तस्मिन्महाब्रह्माण्डविकारसंघस्याऽन्तरतस्त्रयः पुरुषा नानाब्रह्माण्डानां सर्वानेव भावान् युगपत् संचारयन्ति। तत्रायमीश्वरशरीरे प्रवर्तमानोऽव्ययपुरुषः स्वमायायाबलेन महाविशालं यावन्तं प्रदेशमभिव्याप्नोति तदस्य विश्वरूपं नाम मण्डलं भवति, तावदेवेदमीश्वरशरीरं सम्पद्यते। तस्य चेश्वरशरीरस्य हृदयबिन्दौ पञ्चधातुकोऽयमव्ययपुरुषोऽवतिष्ठते। तस्य च रश्मयः सर्वां महाब्रह्माण्डभूमिमभिव्याप्नुवाना हृदयेन बद्धाः सञ्चरन्ति। तमेतमव्ययपुरुषं परोरजा इत्याचक्षते।

## प्राणमयः स्वयम्भूर्ब्रह्मा

तस्य परोरजसोऽव्ययस्याऽश्रयेण पञ्चाप्यक्षरपुरुषा नानाशाखाः पृथक् पृथगवलम्बन्ते। तत्रादौ महाविशालमायाबलमण्डलनाभिस्थमानन्दविज्ञानसत्तामयान् रश्मीन् सर्वतः सञ्चारयन्तमनिरुक्तप्रजापतिरूपं परोरजसमजं नाम कंचिदव्ययपुरुषं परितः परिक्रममाणोऽनिरुक्तप्रजापतिरूपेण वाङ्मयमण्डलनाभिस्थो मनःप्राणवाङ्मयरश्मीन् परितः संचारयन् ब्रह्माक्षरपुरुषस्तावद् ऋक्सामयजुर्भेदभिन्नां त्रयीं विद्यामस्मिन्नखिलब्रह्माण्डे परितः सञ्चारयति।

ब्रह्मज्येष्ठा वीर्या संभृतानि, ब्रह्माग्रे ज्येष्ठं दिवमाततान।
ऋतस्य ब्रह्म प्रथमोत जज्ञे, तेनार्हति ब्रह्मणा स्पर्धितुं कः॥१॥
अन्तरस्मिन्निमे लोकाः, अन्तर्विश्वमिदं जगत्।
ब्रह्मैव भूतानां ज्येष्ठं तेन कोऽर्हति स्पर्धितुम्॥२॥
ब्रह्मन्देवास्त्रयस्त्रिंशद् ब्रह्मन्निन्द्रप्रजापती।
ब्रह्मन् ह विश्वा भूतानि नावीवान्तः समाहिताः॥३॥
(अथर्वण १०।७।८।)

सोऽयमपौरुषेयवेदमयः स्वयंभूर्नाम द्वितीयः प्रजापतिः। तस्य चैषा त्रयीविद्या प्रत्यर्थमग्न्यादित्यवायूपनीता प्रतिष्ठारूपेण संसज्जते। उत्तरतः प्रत्यर्थं संसज्जमानास्ते वेदाः पौरुषेयाः स्युः। अग्निवाय्वादित्यैः पुरुषैरिहोपनीतत्वात्। पौरुषेयाणां वेदानां सहस्रसंज्ञा क्रियते—

"सहस्रं वा अस्मै तत्प्रायच्छद्-ऋचः सामानि यजूँषि।

यद्वा इदं किञ्च तत् त्रैधातव्या" इति मैत्रायण्यां सहितायां चतुर्थप्रपाठकस्य तृतीयकण्डिकोक्तेः।

इन्द्रश्च विष्णुश्चैतत् सहस्रमधितिष्ठतः। तदुक्तं मैत्रायण्यां तत्रैव चतुर्थकण्डिकायां "तस्मिन्वा अवदेताम्। सेयमस्या अध्यर्द्धा वागवदत्"।

"उभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्च नैनोः।

इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वितदैरयेथाम्" इति ॥१।६।७।७॥

तौ चेमौ इन्द्राविष्णू ब्रह्माणमवलम्बेते।



## आपोमयः परमेष्ठी विष्णुः

एकस्मिन्नीश्वरशरीरे नानाब्रह्माणस्तत्रतत्रोपतिष्ठन्ते। एकैकं च तं तं ब्रह्माणं विष्णुप्रभृतयोऽक्षराः क्रमेणावलम्बन्ते। तथा चास्मिन्नीश्वरशरीरे तदेकैकब्रह्मणा समारब्धाः पञ्चाक्षरपुण्डीरा ब्रह्मयो बल्शाः संपद्यन्ते। तत्र यस्यां बल्शायां ममैषा पृथवी संप्रथते तादृक्शाखाप्रवर्तकं ब्रह्माणमेवेहाधिकृत्य सर्वमुत्तरत्तो निरूपयिष्यामः। स्वयंभूनामानं तमेतं वाङ्मयं ब्रह्माणं परमेष्ठी प्रजापतिरापोमयः परितः परिक्रमते। सोऽस्य परिप्रार्धदेवः। वेदाः सत्यम्, नियन्तान्तर्यामी सत्यम्, सूत्रात्मा सत्यम्, इतीदं त्रिसत्यं यथा वाङ्मयस्य स्वयम्भुवो धातुत्रयं भवति, तथैतस्यापोमयस्य परमेष्ठिनोपि धातुत्रयं भाव्यम्-इडा-गौः—ऊर्क् चेति। स यथा स्वयम्भूर्ब्रह्मा त्रयीवेदमयो व्याख्यातः, तथैवायं परमेष्ठी प्रजापतिरथर्ववेदमयः प्रतिपत्तव्यः। त्रयीवेदस्तावदग्निवेदः। अथर्ववेदस्त्वेषः सोमवेद-इति भेदः। षड्ढ वै ब्रह्मणो द्वारः—अग्निः, वायुरापश्चन्द्रमाः, विद्युत् आदित्यः" (शतप ११।३।२।१) इति हि श्रूयते।

तत्र अग्निवायुरादित्य इत्यङ्गिरसः, वायुः, आपः, चन्द्रमाः, इति भृगवः। भृग्वङ्गिरोऽत्रिमयश्चायमथर्ववेदो भवति। ऋत-सत्यसंज्ञकमौलिकतत्त्वविज्ञानं वेदः। तत्र नाभिरहितो निरायतनोऽयमशरीरोऽर्थ ऋतम्। नाभि-प्रधिभ्यां कृतसंस्थः सायतनोर्थः सत्यम्। तयोश्चेह यावता भृगवः प्रक्रमन्ते तदृतम्। यावता त्वङ्गिरसस्तत् सत्यम्। ऋतं सत्ये धायि, सत्यमृते धायि। अन्तरतश्च सत्यस्येदममृतं बहिर्धा च परितः सर्वत्रेदमृतं व्याप्नोति तथा च श्रूयते—

"ऋतमेव परमेष्ठि, ऋतं नात्येति किञ्चन ।
ऋते समुद्र आहित, ऋते भूमिरियं श्रिता" । इति ॥
( तैत्तिरीय ब्रा० २ काण्ड )

" अग्निर्वा ऋतमसावादित्यः सत्यम् " इति श्रुतावग्निरादित्यो वा प्रवर्ग्यावस्थः सन् ऋतत्त्वेन विवद्यते । भृग्वङ्गिरोमयं तमेतं परमेष्ठिनं प्रथमत आपोमयो वरुणः परिक्रामति । तञ्चैनं वरुण प्रथमतो भृगुः, ततोऽङ्गिराः, ततोऽत्रिस्ततो विद्युत्-इत्येते चत्त्वार उत्तरोत्तरक्रमेण परितः परिक्रामन्ति । तेऽस्य परमेष्ठिनः परिप्रार्धदेवाः । आपः, वायुः, सोमश्चेत्येते त्रयो भृगवः प्राणाः स्निग्धाः संसृष्टिहेतवः । ते च विरलानां संसर्जनेन घनीकरणात् पिण्डं जनयन्ति । तत्रापः परमेष्ठि संज्ञाः । ताश्च अम्भोमरीचिर्मरः श्रद्धा इत्येवं चतुर्विधा आपः । सूर्यादूर्ध्वमम्भः । सूर्यकरस्था मरीचिः । पृथ्वी रूपेण परिणममाना मरः । चन्द्रराशिस्था आपः श्रद्धा । एता मौलिका नित्या अमृता आपः । यास्त्वाप इमाः पीयन्ते ता यौगिका याज्ञिका मर्त्याः ।१। अथ वायुः, मातरिश्वा, पवमानः, सविता इत्येते चतुर्विधा वायवः अपामेवैतच्चतुर्विधवायुरूपत्वेन विकारे जाते ततस्तास्वेवाप्सु कश्चिदविकुर्वाण एवात्पल्पो भृगुभावोऽवागवशिष्य ते सोऽथर्वा प्राण इत्यथर्ववेदे व्याख्यातम् । एष एवाथर्वाप्राणः सोमानां वायूनामपां चावलम्बनं भवति तस्मादेतेऽपि त्रयोऽथर्वाण एवोच्यन्ते । सोमस्तु श्रद्धामयो ब्रह्मणस्पतिसंज्ञोऽतिपवित्रतमो मनो जनको ज्ञानप्रयोजको मौलिकोऽर्थः । त एते त्रयो भृगवो व्याख्याताः ।

अथाग्निर्यमआदित्य इत्येते त्रिविधा अङ्गिरसः प्राणास्तेजांसि । तेजस्त्वं स्नेहप्रतिबन्धीधर्मः । ते च प्राणा घनानामवयवसंयोगच्छेदाद्विरलत्वं जनयन्ति । तत्राग्निर्विशकलनहेतुः प्राणो यौगिकेष्वर्थेषु मौलिकानां याज्ञिकसंयोगं विच्छिन्नन्ति । "द्वयं वा अग्ने रूपं निरुक्तञ्चानिरुक्तञ्च" को० १।५।

यमो मृत्युप्राणोऽयममृतस्य सोमस्याग्नौ आहूतिं निरुध्य याज्ञियोगयोग्यतां व्याहन्ति । अग्निः संयुक्तार्थस्य संयोगं वियोजयति । यमस्तु विद्युदग्निर्भविष्यन्तं संयोगं निरुणद्धि । अथायमादित्यप्राणः प्रत्यर्थसंसृष्टं सोमं तत आदायादाय तृत्तद्घनपिण्डं स्वरूपतः परिणमयति । तदुक्तं कुत्सेनाङ्गिरसेन—

"तत्सूर्यस्य देवत्वं तन्महित्वं मध्याकर्तोर्विततं सञ्जभार" इति ।
अत एवैते त्रयोऽपि मृत्यव उच्यन्ते ॥२॥

अथ विद्युन्मयोऽयमत्रिप्राणः। स च पिण्डेऽन्तरतोऽवस्थितः पारदर्शकताभावं नाशयति। ज्योतिष्मतोऽर्थादाक्रममाणं ज्योतिः पिण्डात् प्रत्याहृत्य विपरीतां दिशं प्रति विक्षिपति। पिण्डान्तःप्रवेशं ज्योतिषो निरूणद्धि। ततः पिण्डस्यान्यस्मिन् पृष्ठे कृष्णा रश्मयः प्रवर्त्तमाना दृश्यन्ते, अत एवायमात्रेयश्चन्द्रः परज्योतिः सम्पद्यते। अत एव चेयमात्रेयी रजस्वला भवति। तदित्थं त्रयाणां भृग्वङ्गिरोऽत्रिप्राणानामिहैवाथर्वणा जनितत्त्वादत्राथर्वणि तेषां समावेशादयं परमेष्ठी प्रजापतिरापोमयो वायुमयः सोममयश्च द्रष्टव्यः। तमेतं परमेष्ठिनं विष्णुरित्याचक्षते बहवः। अथैतं परमेष्ठिनं भगवन्तमापोमयो वरुणः परिक्रामति। वरुणं चैतं वायुमयेन हंसेन सोममयेन ब्रह्मणस्पतिना सहितो भृगुः प्रथमस्थाने, सवित्रा सहितो बृहस्पतिरङ्गिरा द्वितीयस्थाने, तथैवायमिन्द्रो विद्युदक्षरः सूर्याख्यस्तृतीयस्थाने परिक्रामति। भृगुर्वै वारुणिरित्याहुः।

आथर्वणिकास्त्वाहुः-परमेष्ठिरेतसा सोमेन गर्भिता आपो द्वैधमभवन्। मिष्टा अन्याः, क्षारा लवणमयाः पुनरिमा अन्याः। मिष्टासु रेतो भृज्यमानं भृगुरभवत्।

स च वायु-मातरिश्व-पवमान-वात-भेदाच्चतुर्धा विकुरुते। अविकुर्वाणस्तु तत्रास्यल्पमात्रोऽन्तर्हितः कश्चिदंशोऽथर्वा नाम। सोऽयमापोमयः परमेष्ठिवदन्यो ब्रह्माऽभवत्। ब्रह्मत्त्वात्तमन्ये परिक्रामन्ति ब्रह्मणस्पत्यादयः। स प्रथमः परिचरः परमेष्ठिनो वेदितव्यः। अथ क्षारा आपस्तद् ब्रह्मरेतः सोमं पर्यावृत्यातिष्ठन्। सोऽद्भिर्वरणाद् वरुणोऽभवत्। अपां समुद्रादमुच्यतेति मुच्यत्वान् मृत्युरुक्तः। सोऽयं वरुणो द्वितीयः परिचरः परमेष्ठिनः संभाव्यते—इति।

## वाग्ब्रह्ममयः सूर्य्य इन्द्रोऽक्षरः

अथान्ये पुनरन्यथा पश्यन्ति–अस्य वरुणस्याङ्गरसेभ्योऽङ्गिरसोऽमी आदित्ययमामयः प्रादुर्भूताः, इत्यतः स सूर्य आदित्यस्तं वरुणं परितः परिक्रामति। सूर्यो वरुणं परिक्रामतीत्याह भगवान् देवरातो वैश्वामित्रः—

"उरुं हि राजा वरुणश्चकार सूर्याय पन्था मन्वेतवा उ।
अपदे पादा प्रतिधातवेऽकुरुतापवक्ता हृदया विधश्चित्॥" ऋ १।२४।८॥

स यथायं प्राणमयः स्वयंभूर्ब्रह्मा आपोमयः परमेष्ठी विष्णु, तद्वदेवायं वाङ्मयः सूर्य्य इन्द्रः प्रतिपत्तव्यः। स एष सूर्योऽपि स्वयम्भूपरमेष्ठिवत् त्रिधातुर्भवति।

ज्योतिः, गौः, आयुः, इत्येते त्रयः सूर्यस्य धातवः। एष सूर्यः प्रथमा द्यौः, परमेष्ठी द्वितीया, स्वयम्भूस्तृतीया। यत्तु तृतीयस्यामितो दिवि सोम आसीदिति परमेष्ठिन एव तृतीयत्त्वमाचक्षते तत्पृथ्वीसूर्ययोरन्तरालमन्तरिक्षमपेक्ष्येति सन्तोष्टव्यम्। अन्तरिक्षस्यापि द्युपदेन विवक्षितत्त्वात्। सूर्यस्य रश्मिमण्डलं प्रथमं विश्वरूपम्, परमेष्ठिमण्डलं द्वितीयम्, स्वयम्भूमण्डलं तृतीयमित्येवैतत् त्रितयमाथर्वणे श्रूयते—

"यत्परममवमं यच्च मध्यमं प्रजापतिः ससृजे विश्वरूपम्।
कियता स्कम्भः प्रविवेश तत्र यन्न प्राविशन् कियत्तद् बभूव॥" १०।७।८। इति।

## अन्नादब्रह्ममयी पृथिवी अग्निरक्षरः

अथैतं सूर्यमिन्द्रं परितोऽयमग्निः परिक्रामति। सोऽङ्गिरोरूपः। "त्वमग्नेऽअङ्गिराः प्रथम ऋषिः" इति श्रुतेः। अग्निर्यम आदित्य इत्येतानि त्रीणि अङ्गिरसो रूपाणि। तमेतमङ्गिरोमयमग्निं पृथ्वीत्याचक्षते।

## अन्नब्रह्ममयश्चन्द्रमाः सोमोऽक्षरः

तामेतामग्निरूपां पृथ्वीं सोमः परितः परिक्रामति, तं चन्द्रमा इत्याचक्षते। "एष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः" इति श्रुतेः।

## सप्तलोकविभागः

तदित्थं परोरजसमव्ययमाश्रित्य ब्रह्मा, विष्णुः, इन्द्रः, अग्निः, सोम इत्येते पञ्चाप्यक्षरपुरुषा उत्तरोत्तरं परिक्रामन्तं परिक्रमाणाः सर्वं क्षरसृष्टिचक्रं सञ्चालयन्ति। एषु स्वयम्भुवः प्रजापतेः प्राणमयेन वाङ्मयेन वेदमयेन वा रश्मिमण्डलेन क्लृप्तं ब्रह्माण्डं सत्यं नामोत्तमो लोकः।

तत्रैतस्या वाचो महोक्थ–महाव्रत–यजुरभिभेदैस्त्रैविध्यात् प्रधानभूतयजुःसम्बन्धेन तदाण्डं स्थितिगतिमत्प्राणमयं परमाकाशमुच्यते॥१॥

अथ परमेष्ठिनः प्रजापतेरथर्वमयेन रश्मिमण्डलेन क्लृप्तं ब्रह्माण्डं जनन्नाम मध्यमो लोकः। तत्र लोकिनोऽथर्वण आपोवायुसोमभेदैस्त्रैविध्यात् प्रधानभूतानामपां सम्बन्धेन तदाण्डं समुद्र उच्यते। वायोश्चायं समुद्रः। तत्रैतासामपां वायुरूपेण संचारित्वात्। तस्य यावति प्रदेशेऽयं सूर्य्यप्रकाशः प्रविष्टो विभ्राजते स वेनो नाम। तत ऊर्ध्वमयमन्धकारोऽतिनिविडोऽयमेतमूर्ध्वं परितः पश्यामः।

अथ सूर्यस्य प्रजापतेर्ज्योतिमयेन रश्मिमण्डलेन क्लृप्तं ब्रह्मान्दं स्वर्गो नाम प्रथमो लोकः।

तत्र लोकिनां देवानां वसुरुद्रादित्यभेदैस्त्रैविध्यात् प्रधानभूतादित्यसम्बन्धेन तदान्दं तेजोमयं हिरण्मयं वैश्वदेव्यमुच्यते। त एते स्वर्गादयः प्रथममध्यमोत्तमास्त्रयो लोकाः। तत्रैतस्मिन् प्रथमे हिरण्मयलोके सर्वेऽप्युपरितनलोकधर्म्मा अनुवर्त्तन्ते। उक्तं च—

"हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्।
तच्छुभ्रं ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्॥
हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।
तत् त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये" इति॥

अपि च प्रतिलोकं पुनस्त्रैविध्यान् त्रेधा त्रैलोक्यं सम्पद्यते। येयं तावद् भूमिर्यामधितिष्ठामः सा पृथिवी। सूर्यो द्यौः। उभयी सैषा द्यावापृथिवी मध्यमेनान्तरिक्षेण प्रथमा त्रिलोकी सम्पद्यते सा रोदसी नाम॥१॥ एवमसौ सूर्यः पृथिवी। परमेष्ठी द्यौः। उभयी चैषा द्यावापृथिवी मध्यमेनान्तरिक्षेण द्वितीया त्रिलोकी सम्पद्यते सा क्रन्दसी नाम॥२॥ अथैवमसौ परमेष्ठी पृथिवी। स्वयम्भूर्द्यौः। उभयी चासौ द्यावापृथिवी मध्यमेनान्तरिक्षेण तृतीया त्रिलोकी सम्पद्यते सा संयती नाम॥३॥ तिस्रः पृथिव्यः त्रीण्यन्तरिक्षाणि। तिस्रो द्यावः—इत्याह भगवान् वसिष्ठो मध्यमस्य परमेष्ठिनो वरुणस्य दिवः स्तुतौ—

"तिस्रो द्यावो निहिता अन्तरस्मिन् तिस्रो भूमीरुपराः षड्विधाना।
गृत्सो राजा वरुणश्चक्र एतं दिवि प्रेङ्खं हिरण्मयं शुभेकम्॥" ७।८७॥

अपिचाह—कूर्मो गात्समदो मध्यमानां मित्रवरुणार्यम्णां दिवः स्तुतौ—

तिस्रो भूमीर्धारयं त्रींरुत द्यून् त्रीणि व्रता विदथे अन्तरेषाम्।
ऋतेनादित्या महिवो महत्वं तदर्यमन् वरुण मित्र चारु॥ (२।२७।८)

अपि चाह दीर्घतमा मामतेय औतथ्यः परमस्य स्वयंभुवो दिवः स्तुतौ—

"तिस्रो मातृस्त्रीन् पितृन् बिभ्रदेक ऊर्ध्वस्तस्थौ नेमवग्लापयन्ति।
मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं वाचमविश्वमिन्वाम्॥" १।१६४।१०,

अपि चाह हिरण्यस्तूप आङ्गिरसः प्रथमस्यास्य सूर्यस्य दिवः स्तुतौ—

"तिस्रो द्यावः सवितुर्द्वा उपस्थां एका यमस्य भुवने विराषाट्।
आणिं न रथ्यममृताधितस्थुरिह ब्रवीतु य उ तच्चिकेतत्॥" १।३५।६॥

भगवान् याज्ञवल्क्योऽप्याह—

त्रयो वा इमे लोकाः, अद्धा वै तद् यदिमे लोकाः।
अनद्धा वै तद् यदिमान् लोकाननति चतुर्थम्। अस्ति·वा न वा। ( शतपथ )

एभिश्च त्रिभिस्त्रैलोक्यैः क्रमसङ्कलितैः सप्तलोका उपपद्यन्ते। तत्र पृथिवीयग्निर्भूर्लोकः। चन्द्रमाः सोमो भुवर्लोकः। सूर्योऽयमिन्द्रः स्वर्लोकः। ब्रह्मणस्पतिर्भृगुश्च महर्लोकः। वरुणोपेतः परमेष्ठि विष्णुर्जनल्लोकः। परमेष्ठिस्वयम्भुवोर्मध्ये विद्युन्मयः कश्चिदिन्द्रस्तपो लोकः। वेदमयो ब्रह्मा तु सत्यलोकः। त एते सप्तलोका रजांसि कथ्यन्ते। यस्तु सप्तभ्योऽप्येतेभ्यो रजोभ्यः परस्तादव्ययपुरुषोऽक्षराणामेषां पञ्चानामालम्बनरूपो विभ्राजते स रजोभ्यः परस्तादस्तीति परोरजा इत्युच्यते। तत्रायं वेदमयो ब्रह्मा षडप्यवराणि रजांसि विधृत्य परस्मिन्नजेऽव्यये सन्निधत्ते। तं जिज्ञासामुखेन सूचयति भगवान् दीर्घतमा औतथ्यः—

"अचिकित्वान् चिकितुषश्चिदत्र कवीन् पृच्छामि विद्मने न विद्वान्।
वि यस्तस्तम्भ षडिमा रजांसि अजस्य रूपे किमपि स्विदेकम् ॥" इति।

भगवानैतरेयोऽप्याह—

"यदक्षरादक्षरमेति युक्तं युजो युक्ता अभि यत् संवहन्ति।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति॥"
( ऐ० आ० २ आ० ३ अ० ८ खण्ड इति )

# सप्तलोकानामेकाव्ययपुरुषोदरवर्तित्त्वम्

तत्तद् ब्रह्मणो रश्मिमण्डलमेतस्य स्वं स्वं वैश्वरूप्यं विज्ञायते। तत्रोत्तरमुत्तरब्रह्मक्रमेण पूर्वस्मिन् वैश्वरूप्ये संनिविशते। यथाऽयं चन्द्रमाः पृथ्वीवैश्वरूप्येऽन्तर्धत्ते। एवमियं पृथिवी सूर्य्यवैश्वरूप्ये। तच्च परमेष्ठिवैश्वरूप्ये, तदपि वेदमये स्वयंभूवैश्वरूप्ये, तदपि च पुनः परोरजसो रश्मिमण्डलेऽन्तर्धत्ते। न ततो बहिर्धा भवति। तदित्थमुत्तरोत्तराणां पूर्वपूर्वमण्डल आलम्बितत्वात् सर्वेषामेषां स परोरजा अव्यय एव परमालम्बनं भवति। तथा चयश्रुते—

"एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा यो यदिच्छति तस्य तत् ॥" इति ।

तदित्थमधिदैवतं त्रयः पुरुषा व्याख्याताः ।

इति आधिदैविकोद्द्योतस्तृतीयः प्रकाशः ॥३॥

## अथ आधिभौतिकनिरुक्तिः

अथैतेषु चन्द्रपृथ्वीसूर्य्यपरमेष्ठ्यादिजडपिण्डेषु तत्तत्पिण्डोपजनितेषु च नानाविधेषु जडपिण्डेषु ते त्रयस्त्रयः पुरुषाऽउपक्लृप्ता आधिभौतिका ज्ञेयाः ।

## अथ आध्यात्मिकनिरुक्तिः

अथाध्यात्मम् । योऽयमधिदैवतं पुरुषग्रामो भूतग्रामो वेश्वरशब्देनाख्यायते स सम्पूर्णावयवत्वाद्वर्तुलवृत्तशरीरो द्रष्टव्यः । तस्य सर्वाः शक्तयः सर्वा दिशमनु समानाः कार्यकारिण्यो भवन्ति । सर्वासु दिक्षु अप्रतिहतेन्द्रियसत्वात् । तथा च श्रूयते—

"सर्वतः पाणिपाद तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वम वृत्य तिष्ठति" ॥१॥

"तस्मात्परं नापरमस्ति किञ्चित् तस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" ॥ २ ॥ इत्यादि ।

ईश्वरावयवभूते तु पृथिव्यादिपिण्डे समुत्पन्नोऽयं जीवो भवत्यर्धेन्द्रः । अर्धेनैवात्मना समुत्पन्न इति कृत्वा एकतो दिशि स्वेन्द्रियैः प्रचरति न समं सर्वतो दिशि । यथास्य मुखतो दिशि चक्षुर्हस्तादिकाः प्रभवन्ति न तथा पृष्ठतो दिशि । अत एवायं जीवोऽर्धेन्द्रत्वादपूर्णात्मत्वाच्च दुःखमनुभवति, पूर्णत्वायैव च पत्नीमिच्छति, स यदा पत्न्या संयुज्यते तदा पूर्णो भूत्वा पूर्णात्मानमीश्वरं यज्ञेन याजयितुं प्रभवति इति शुक्लयजुर्वेदे कृष्णयजुर्वेदे च भूयसा निरूपितम् । अर्धेन्द्रत्वादयं जीवो वर्तुलवृत्तशरीरमलब्ध्वा दीर्घशरीरो भवति ।

## अथ सर्वात्मनामाधाराश्वदात्मा

तत्रायमात्मा पुरुषभेदाद्भिद्यते । तथा हीश्वरवज्जीवेऽप्येकस्मिन् परोरजस्यव्यये

चिदात्मनि पञ्चान्तराः पञ्चात्मानः क्रमेण संनिविशन्ते। ते च पञ्चापि जीवस्यार्धेन्द्रतयाऽपूर्णमात्रा दृश्यन्ते।

## प्रथमः प्राणमयः शान्तात्मा ब्रह्मा

अध्यात्मं पञ्चान्तरस्वरूपाणां पञ्चात्मनां प्रथमः प्राणमयः शान्तात्मा स्वयम्भूर्ब्रह्मा। ततः क्रमेणापोमयः परमेष्ठी महानात्मा, अथ वाङ्मयः सूर्यो विज्ञानात्मा, अथ अन्नमयश्चन्द्रः प्रज्ञानात्मा, अथान्नादमयोऽग्निर्भूतात्मा इति विद्यात्।

ब्रह्मैवास्य सर्वस्य वेदमयः प्रतिष्ठा। तेनैतमिञ्छरीरे सर्वतः पूर्वं प्रतिष्ठा संनिधत्ते। मातृगर्भे रेतस आधाने ब्रह्मणैव प्रतिष्ठां प्राप्य मातृगर्भे प्रतिष्ठितं रेतः शरीरनिर्माणाय प्रभवति। पश्चादपि षष्ठे मासि तच्छरीरहृदये प्रतिष्ठां प्राप्य ब्रह्मणेन्द्रविष्णू प्रतिष्ठितौ सर्वं क्रियाकलापं ज्ञानकलापं च जनयन्तौ सन्तौ चैतन्यं कुरुतः। तस्मादेष प्रतिष्ठात्मको ब्रह्मा प्रथम आत्मा शान्तात्मा नाम ॥१॥

## अथ द्वितीय आपोमयो महानात्मा विष्णुः

अस्य शान्तात्मन आलम्बेनास्मिन् शरीरे ब्रह्मसहचरः परमेष्ठी विष्णुः सन्निधाय यज्ञस्वाभाव्यात् स उक्थमर्कोऽशितिरित्येवं त्रेधाऽऽत्मानं विभज्य यज्ञं तनोति। तत्रायमुक्थरूपेण हृदये प्रतिष्ठितो विष्णुरर्को भूत्वा प्रत्युत्थितः।

सोऽन्नमादातुं त्रिभिर्विक्रमैर्विक्रमते। तस्य त्रिवृत्स्तोमे पञ्चदशस्तोमे एकविंशस्तोमे चेतिकृत्वा त्रयो विक्रमा भवन्ति। तैरयमर्कात्मना परिणतोऽन्नादो विष्णुस्त्रिणव-त्रयस्त्रिंशाभ्यां स्तोमाभ्यां सोममुपादत्ते। अन्नोर्क् प्राणक्रमेण तदन्नमुक्थे सम्प्रवेशयायमर्कः संशाम्यति। एष एव चायमन्नोर्क् प्राणानामन्योन्यपरिग्रहलक्षणो यज्ञो जीवतो जीवस्य जीवनमूलं भवति। सोऽयं विष्णुर्यज्ञमयो द्वितीय आत्मा यज्ञात्मा नाम। स यथा प्रथमः शान्तात्मा शरीरस्थे बीजग्रामे देवग्रामे भूतग्रामे च प्रतिष्ठामात्मधृतिलक्षणां पशुविधृतिलक्षणां चादधानो यज्ञं प्रवर्तयति, एवमयं द्वितीयो महात्मा त्रैगुण्यमहंकृती-प्रकृती-आकृती चादधानो यज्ञं प्रवर्त्तयति।

यथैवायमोजोधातुकृताशयः शान्तात्मा स्वयंभूरसः, यथैव चायमसृग्धातुकृताशयो विज्ञानात्मा सूर्यरसस्तथैवायमन्यो महानात्मा परमेष्ठिरसः प्रतिपत्तव्यः। स च शरीरे शुक्रधातुमभिव्याप्य तिष्ठति। तेनैतस्य परमेष्ठी प्रभवः। भ्रुवोर्घ्राणस्य च यः सन्धिः सोऽस्य योनिः। आहृदयमाब्रह्मरन्ध्रं प्रादेशद्वयमस्य प्रतिष्ठा। शुक्रधातुरा-

शयः। यावन्तो वा मनुष्य-पशु-पक्ति-कृमि-कीटादयो योन्याकृतिविशेषा दृश्यन्ते, तेषां सर्वेषां मूलभूतोऽयं महानात्मा। महानेवायमक्षरो यथाकृतिरव्यये सन्निधत्ते, तथैवायं भूतात्मा शरीरेणोपसंपद्यते। श्रूयते हि—"भूतं भविष्यत् प्रस्तौमि महद्ब्रह्मैकमक्षरम्। बहु ब्रह्मैकमक्षरम्" इति। प्रतिशरीरं चायमन्वरतस्तिष्ठंस्तत्तच्छरीरस्याकारं स्वस्मिन्नासादयति। तथा चोपनिषदि श्रूयते—

"अशरीरं शरीरेषु अनवस्थेष्ववस्थितम्।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥"

भगवद्गीतायामप्युक्तम्—

"मम योनिर्महद् ब्रह्म तस्मिन्गर्भं दधाम्यहम्।
संभवः सर्वभूतानां ततो भवति भारत!॥१॥
सर्वयोनिषु कौन्तेय! मूर्तयः सभवन्ति याः।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता॥२॥" इति॥

अत्राहं मम शब्दोऽव्ययाभिप्रायः। अव्यय एव हि तस्मिन्महत्यक्षरे बीजं सम्पादयति। बीजमिति कारणशरीरोपादकं भवति। बीजाच्च दैवतानि सूक्ष्मशरीररूपाणि तथा भूतानि स्थूलशरीरोपपादकानि च भवन्ति। तेनाशरीर एवायं महानात्मा कारण-सूक्ष्म-स्थूल-भेदात् त्रिभेदं शरीरं जनयति। तदित्थं परमेष्ठिसोमरसरूपो महानात्मा द्वितीय आत्मा व्याख्यातः।

## वाग्ब्रह्ममयस्तृतीयो विज्ञानात्मा इन्द्रः

अथैतं शान्तात्मानं ब्रह्माणमेतं यज्ञात्मानं विष्णुं चालम्ब्य सूर्यादुपस्थित इन्द्रो विज्ञानं शरीरे जनयति। स खल्विन्द्रो ज्योतिष्टोम-गोष्टोमा-युष्टोम-भेदात् त्रिस्तोमः सूर्यरसः शरीरस्थे यज्ञे प्राणो भूत्वाऽवतिष्ठते। एष एव च विज्ञानात्मा क्षेत्रज्ञात्मा इत्युच्यते।

स हि भगवद्गीतोक्तप्रकारेणैकत्रिंशत्कलं क्षेत्रं ज्ञानेन पर्याप्नोति तस्मात् क्षेत्रज्ञ इत्युच्यते। इहहि जीवशरीरे भौतिकज्ञानमयः प्राज्ञात्मा नाम भूतात्मा सर्वाणि संज्ञावह चेष्टावहनाडीभ्यां जन्यमानानि ज्ञानकर्माणि जनयतीति वक्ष्यामि। तमेवैतं प्राज्ञं नाम भूतात्मानं सर्वाणि शरीरकर्माणि कुर्वन्तमेष विज्ञानात्मा क्षेत्रज्ञः कारयति। तदुक्तं मनुना—

योऽस्याऽऽत्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते ।
यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ॥
जीवसंज्ञोऽन्तरात्माऽन्यः सहजः सर्वदेहिनाम् ।
येन वेदयते सर्वं सुखं दुःखञ्च जन्मसु ॥इति॥

सोऽयं तृतीयो विज्ञानात्मा महत्यात्मनि प्रज्ञानात्मनि प्राणात्मनि भूतात्मनि च प्रकाशमादधानो जीवनहेतुमायुः प्रवर्तयति । अध्यात्मं चैष हृदयस्थः सूर्यः । तस्यैतद् वैज्ञानिकं रश्मिमण्डलं शोणिताकाशेऽभिव्याप्नोति । तथा च सूर्य्यः प्रभवः । ब्रह्मरन्ध्रं दृतिर्नान्दनं योनिः । हृदयं प्रतिष्ठा । शोणितमाशय इति विज्ञानात्मनश्चत्वारोऽनुबन्धा भाव्याः । तदित्थं सूर्यरसरूपो विज्ञानात्मा व्याख्यातः ॥३॥

## अन्नब्रह्ममयश्चतुर्थः प्रज्ञानात्मा सोमः

इह हि पृथवीपृष्ठे या एता ओषधयः प्रजायन्ते तासामुदर्कभूतस्यान्नस्यारम्भकद्रव्याणि त्रेधा विविच्यन्ते-पार्थिवानि-आन्तरीक्ष्याणि दिव्यानि चेति । अग्नौ चान्नपरिपाकवशात् तदारम्भकाणां क्रमेण संबन्धविच्छेदे विशकलितयोरमृतमर्त्यभागयोरमृतं रसो भूत्वा प्राणैरूर्ध्वं नीयते । मर्त्यं मलं भूत्वाऽपानेनाधस्तान्निपात्यते । तत्र तावत्पार्थिवानां मर्त्यामृतद्रव्याणामग्निपरिपाकवशादुत्तरोत्तरविभागक्रमतो रसासृङ्मासमेदोऽस्थिमज्जशुक्राणि जायन्ते । ततः पार्थिवद्रव्याणामैकान्तिकनिर्ह्रारे आपो-वायु-विद्युत्सोममयमान्तरीक्ष्यमोजो नाम धातुः स्थितिं लभते । अथैतस्मादोजसोऽप्यापोवाय्वोः पृथग्भावे विद्युत्सोममयं यदवशिष्यते किञ्चित् तन्मनो नाम । तथा चैतदन्नस्थः सोमरसः क्रमेण विशुद्धो भूत्वा मनो नाम रूपं जायते इति सिद्धम् । तस्मिन्नस्मिन् स्वच्छतमे मनसि प्रतिविम्बितः क्षेत्रज्ञसूर्य्यरश्मिर्ज्योत्स्नां जनयतीति मनः प्रज्ञानात्मा भवति । तमेतमैतरेयः प्राह—"कोऽयमात्मेति वयमुपास्महे, कतरः स आत्मा। येन वा पश्यति। येन वा शृणोति । येन वा गन्धानाजिघ्रति । येन वा वाचं व्याकरोति । येन वा स्वादु चास्वादु च विजानाति यदेतद्धृदयं मनश्चैतत संज्ञानमाज्ञानं प्रज्ञानम्, मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः, क्रतुरसुः कामोवशः-इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति । एष ब्रह्मा, एष इन्द्रः, एष प्रजापतिः, एते सर्वे देवाः, इमानि च पञ्चमहाभूतानि पृथिवी वायुराकाश आपो ज्योतींषि । यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्चस्थावरं सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा, प्रज्ञानं ब्रह्म । स एतेन प्रज्ञेनात्मनाऽ

स्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत्" इति। इदं त्वत्रापरं बोध्यम्-मनस्तावद् विविधम्-चिदात्मकं प्राणात्मकमिन्द्रियात्मकं चेति। श्वोवसीयसमव्ययं मनश्चिदात्मकं तत्प्रथमम्। सर्वेन्द्रियप्रवर्त्तकमिन्द्रियं मनः प्राणात्मकं तद् द्वितीयम्। सुखदुःखवेदनीयगुणकं हृदयस्थानमिन्द्रियात्मकं तत्तृतीयम्। तत्रेदं द्वितीयं मनः प्रज्ञानात्मा नाम। वाचि सा वाक्। रसनायां स रसः। घ्राणे स गन्धः। श्रोत्रे स शब्दः। त्वचि स स्पर्शः। चक्षुषि तद्रूपम्। हृदि तन्मनः। भिन्नवर्णकाचानुगतः सूर्य्यरश्मिर्यथा भिन्नवर्णस्तथायं प्रज्ञानात्मा भिन्नगुणकेन्द्रियानुगतो भिन्नगुणोऽभिनिष्पद्यते। स एक एवायं प्रज्ञानात्मा तत्तदिन्द्रियानुगतिवशात्तत्तदिन्द्रियज्योतिर्जनयतीति स एवायं प्राणात्मा नाम चन्द्रमा विज्ञातव्यः। स एष सोमः प्राणस्तस्मिंस्त्रयोऽग्नयो द्वौ सोमाविति पञ्चदेवा अन्वाभक्ता भवन्ति। तदुक्तमैतरेयके—

"अथाधिदैवतम्-चक्षुः श्रोत्रं मनो वाक् प्राणः, ता एताः पंचदेवता इमं विष्टाः पुरुषम्। पञ्चोहैवैता देवता अयं विष्टः पुरुषः। सोऽत्रालोमभ्य आनखाग्रेभ्यः सर्वः साङ्ग आप्यते। तस्मात् सर्वाणि भूतानि आपिपीलिकाभ्यः-आप्तान्येव जायन्ते (ऐ० १।३।६।) इति।

स एष प्रज्ञानात्मा प्राणात्मा नाम चन्द्रमा मुखस्थां वागूलक्षणां पृथ्वीं परिक्रममाणः-आहृदयमाकेशान्तं द्विप्रादेशलक्षणां स्वकक्षामध्यूढः संचरति। तत्र हृदयस्थस्य क्षेत्रज्ञसूर्य्यस्य ज्योतिषा ज्योतिष्मानयं चन्द्रमाः शिरसि केशान्तस्थानस्थः पूर्णिमां कुर्वाणः शीर्षण्यानीन्द्रियाणि चन्द्रिकयेव प्रकाशयतीति बहिरिन्द्रियार्थानामाहरणा भूतात्मनो जाग्रदवस्थोपपद्यते। अथ तालुप्रदेशे गोस्तनस्थानस्थोऽष्टमीं जनयन् शीर्षण्यानीन्द्रियाण्यस्पृशन्नधस्ताद् भावनावासनारूपान् संस्कारान् ज्योतिषा प्रकाशयतीति भूतात्मनः स्वप्नावस्थोपपद्यते। अथैतस्माद्प्यधस्तात् संचरन् हृदयसदेशं गतः क्षेत्रज्ञसूर्य्येण सह वसतीत्यमावास्योपजायते, तत्र केवलमात्मानन्दमेवानुभवति, नान्यं कंचन विषयम्, सैषा भूतात्मनः सुषुप्त्यवस्थोपपद्यते। तदेतस्य चन्द्रमसो अध्यात्मं भूतात्मावस्थात्रयोपपादकं पदत्रयं भगवान् तित्तिरिः प्रदर्शयति। तस्यैतस्याध्यत्मिकस्य चन्द्रमसोऽयं संचारो याद्दच्छिको न तु दिव्यचन्द्रवन्नियतकाल इति विशेषः।

"स य एषोऽन्तर्हृदय आकाशः, तस्मिन्नयं पुरुषो मनोमयः, अमृतो हिरण्मयः। अन्तरेण तालुके य एष स्तन इवावलम्बते-सेन्द्रयोनिः। यत्रासौ केशान्तो विवर्तते

न्यग्रोध शीर्षकपाले। आकाशशरीरं ब्रह्म, सत्यात्मप्राणारामं मन-आनन्दम्, शान्तिसमृद्धममृतम् (तै० उपनिषत्)" इति॥

## पञ्चमोऽन्नादमयो भूतात्मा शरीरात्मा—अग्निः

अथाग्निमयः पृथ्वीरसरूपः पञ्चम आत्मा भूतात्मा नाम। स तावत् त्रिविधः—शरीरात्मा, हंसात्मा, दिव्यात्मा चेति। तत्र पञ्चभूतान्येव शरीराकारेण विशेषसन्निवेशयुक्तानि शरीरात्मा भवति। तत्रैतानि भूतानि मर्त्याग्निः पृथ्वीरसरूपो द्रष्टव्यः। स भूतात्मभेदेषु प्रथमो भूतात्मा शरीरात्मा मर्त्योऽग्निः॥१॥

## अथ द्वितीयो भूतात्मा हंसात्मा मर्त्यवायुः

तत्रैतस्मिन् बाह्यात्मनि शरीरात्मनि प्रतिभूतमभिव्याप्नुवानो भूताभिमानी वायुः शरीरावच्छेदाकारेण सङ्गठितो हंसात्मा भवति। स च जीवनकाले भौतिकशरीरानुगतः शरीरे प्रविष्ट एव प्रायेणावतिष्ठते। किन्तु मरणोत्तरं शरीरनिखनने तदेव शरीरमालम्बमानो यतस्ततो वायौ सञ्चरति। शरीरदाहे तु शरीराभावान् मृन्मयशरीरवियुक्तो हंसात्मा अस्याः पृथिव्या उपरिष्टादेमूषवायौ वायव्यशरीरो यतस्ततोऽनुसञ्चरति। स च शतं वर्षाणि चिरञ्जीवति। सामान्यज्ञानवान्, जीवनकालीनज्ञानतुल्यज्ञानो वा, जीवनकालीनसुखदुःखावस्था तुल्यावस्थो वा। स च वायव्यशरीरत्वात् परकायप्रवेशङ्करोति। नानाजीवशरीराकृतिं धारणसमर्थः स कदाचिद् दृश्योभवति, स्वप्ने चागत्य वक्तुं लभते। जीवतोऽपि शरीरसन्निधौ कदाचिदागत्याऽदृश्यः किञ्चित् कर्णे ब्रूते, किन्तु न दृश्यते। तमेव योनिविशेषं भूत इत्याचक्षते लोकाः। गयाश्राद्धेन तस्य हंसात्मनः शरीरनाशो भवतीति केचिद् वैज्ञानिका आहुः। तदित्थं पृथ्वीलोकगतैमूषवायुमयोऽयं हंसात्मा नाम भूतात्मा व्याख्यातः॥२॥

## अथ तृतीयो भूतात्मा दिव्यात्मा प्राणः

एष च दिव्यात्मा भूतात्मा लोकत्रयविभक्तप्राणत्रैविध्यात् त्रिधा विभक्तो वद्यते- वैश्वानरोऽग्निः, तैजसो वायुः, प्राज्ञो नामेन्द्रश्चेति। तत्रायमिन्द्रः प्राण एव प्रज्ञात्मा। "यः प्राणः सा प्रज्ञा। या प्रज्ञा स प्राणः। सह ह्येतावस्मिन् शरीरे वसतः सहोतिष्ठतः। तमेतमायुरमृतमित्युपास्स्वे" त्याह कौषीतकिश्रुतिः। तथा च ज्ञानमयः कर्ममयश्चायं प्राज्ञो ज्ञानकर्मजनिताभ्यां भावना-वासनाभ्यां संपरिप्लुतो ज्ञानात्मा च भवति कर्मात्मा च।

सोऽयं प्रज्ञामयः प्राणः सूर्यरसत्त्वादिन्द्रो भुक्तान्नपरिणामजे चान्द्रमसरसमये सोमे मनसि प्रतिफलितः प्राज्ञो नाम भूतात्मोपपद्यते। तत्रैतस्मिन् मनसीदं ज्योतिर्विज्ञानात्मन एवोपलभ्यत इति विज्ञेयम्। स एष तृतीयो भूतात्मा कर्मात्मा नाम। यथा मर्त्याग्निमयः शरीरात्मा प्रथमो भूतात्मा, यथा वा वायुमयो हंसात्मा द्वितीयो भूतात्मा, तथैव इन्द्रमयः कर्मात्मा तृतीयो भूतात्मा। एते हि अग्निवाय्विन्द्राः केनोपनिषत्प्रसिद्धाः पृथिव्यां चोपलभ्यन्ते। तस्मात् त्रिभिरेतैः पृथ्वीरसैस्त्रिविधा भूतात्मानः सम्पद्यन्ते।

## कर्मात्मत्रैविध्यनिरुक्तिः

सोऽयं कर्मपरतन्त्रः कर्मात्मा त्रिविधो भवति-वैश्वानरः, तैजसः, प्राज्ञ, इति। तत्र वैश्वानरोऽग्निमयः, तैजसो वायुमयः, प्राज्ञ इन्द्रमयः। तेषु यत्र केवलो वैश्वानर एव शरीरतन्त्रधरो भवति न तैजसप्राज्ञौ, स खनिजमणिप्रस्तरादिर्धातुजीवो भवति। यत्र तु वैश्वानरस्तैजसश्च तन्त्रधरौ भवतः स मूलजीवः। यथा वनौषधिवनस्पत्यादिः। अथ यत्र शरीरे वैश्वानरस्तैजसः प्राज्ञ इति त्रयोऽपि देवा आत्मानस्तन्त्रधरा भवन्ति स चेतनजीवो यथा कृमिकीटपशुपक्षिमनुष्यादिः। त्रयोऽप्येते जीवाः क्रमेणासंज्ञाः, अन्तःसंज्ञाः, ससंज्ञा दृश्यन्ते। तत्र धातुजीवेऽग्निरेको वैश्वानरः शरीरधातुसंगठनकर्म्मा शरीरोपादानभूतान् शरीरधातून् भिन्नभिन्नरूपेण सुवर्णरजतताम्रादिना जनयति। मूलशरीरे च काष्ठविशेषरूपाणि फलपत्रपुष्पकाण्डादीनि च भिन्नभिन्नरूपाणि जनयति। चेतनशरीरे च स एव वैश्वानरः शोणितमांसमेदोऽस्थ्यादि धातुविशेषरूपाण्युत्पादयति। अथायमन्यस्तैजसात्मा तु आरोहावरोहकर्मा अन्तःसंज्ञान् वृक्षादिमूलजीवान्, तथा ससंज्ञान् मनुष्यादिचेतनजीवान् क्रमेण परिवर्द्धयन् बाल्यतारुण्याद्यवस्थाविशेषैः संयोजयति। सुवर्णादिषु पिण्डेषु च धातुजीवेषु न शरीरवृद्ध्यादिरूपोऽवस्थाकृतो विशेषः परिदृश्यते। तत्कारणस्य वायुमयस्य तैजसप्राणस्य तत्राऽभावात्। अथ तृतीयस्तु प्रज्ञात्मा वैश्वानरतैजसप्राणपरिपाकेनोत्पद्यते। स एव प्रज्ञानात्मा शरीरे अहं परबुद्ध्यादि रूपं चैतन्यं जनयति। तत एव चेन्द्रप्राणात् सर्वाणीन्द्रियाणि चक्षुःश्रोत्रवागादीनि यथायथं प्रादुर्भवन्ति। इन्द्राख्यमुख्यप्राणजनितत्त्वादेव च ते प्राणा इन्द्रियाणीत्युच्यन्ते। यद्यपि वृक्षादिषु मूलजीवेष्वपि तानीन्द्रियाणि सन्ति, अतिसूक्ष्मदृष्ट्या तत्रापि चेतनजीववत् सुखदुःखादिप्रत्ययदर्शनात्, तथापि चेतनजीवस्य सुप्तस्येव तत्र वृक्षादिषु इन्द्रियवृत्तेरनुल्वणतया तेषां मूलजीवानामन्तःसंज्ञत्वं महर्षय आचक्षते।

तेषु हि-अनुद्बुद्धः प्रज्ञाप्राणश्चेतनजीवशरीरे सम्यगुद्बुद्धो भवति। तथा चैतत् प्राणत्रयतारतम्यात् त्रिविधो जीवः प्रतिपद्यते-धातुः, मूलम्, चेतनश्चेति। तदित्थं वैश्वानरः-तैजसः-प्राज्ञ इति त्रेधा विभक्तः कर्मात्मा नामायं भूतात्मा सिद्धो भवति। तेन च शरीरात्मा, हंसात्मा, वैश्वानरात्मा, तैजसात्मा, प्राज्ञात्मा, इत्येवं पञ्चधा विभक्तो भूतात्मा नाम द्रष्टव्यः। तत्र शरीरात्मा हंसात्मेति द्वौ बाह्यात्मानौ। वैश्वानरादयन्तु त्रयोऽन्तरात्मानः संज्ञायन्ते। पञ्चविधोऽप्ययं भूतात्मा प्राज्ञात्मना विशिष्यते। तस्मादयं प्राज्ञात्मा इत्युच्यते। तदित्थं पृथ्वीरसमयः पञ्चम आत्मा पञ्चभेदभिन्नो भूतात्मा नाम व्याख्यातः ॥५॥

## आत्मगतिविवेकः

तत्र मरणोत्तरं शरीरात्मा पञ्चत्त्वं याति। अर्थात् पृथिव्यादयः पञ्च धातवः शरीरस्था विश्लथाः सन्तः शरीरात् पृथग्भूय पृथिव्यादिषु पंचधातुषु यथायथं संसृज्य शारीरस्वरूपाणि चर्म्मत्त्वमांसत्त्वास्थित्त्वादीनि त्यजन्ति। सैषा शरीरस्थभूतानां पञ्चत्त्वगतिर्भवति। अथ वागग्नौ, प्राणो वायौ, चक्षुरादित्ये, श्रोत्रं दिक्चन्द्रे, मनो ब्रह्मणस्पतिचन्द्रे च यथायथं संसृज्याध्यात्मिकस्वरूपतश्च्यवन्ते। सैषा शरीरस्थदैवतानां पञ्चत्त्वगतिर्भवति। तथा च सूक्ष्मस्थूलभेदाद्विभक्तस्य शरीरात्मनः पञ्चत्त्वगतिर्व्याख्याता ॥१॥

अथ हंसात्मनस्तु एमूषवायौ योनिविशेषरूपेण नवीनं जन्म भवति। तस्य तत्र चिरञ्जीवनं लोके दृश्यते। तस्य मृत्यौ वायौ विलयनं सम्भाव्यते ॥२॥

अथ तृतीयो भूतात्मा कर्मात्मा व्याख्यातः—स खलु पुण्यपापाभ्यां कर्मभ्यामनुबध्यमानः शरीरत्यागानन्तरं कर्मगतिं गतः पारवश्यात् पापान् वा लोकान् गच्छति पुण्यान् वा। पृथिव्याः सकाशात् सूर्यविरुद्धदिशि शनैश्चरपर्य्यन्तं लोकालोकपर्यन्तं वा गमनमधोगतिः पापगति र्भवति, सान्धकारप्रायत्त्वात् कृष्णा गतिः। पृथिव्याः सकाशात् सूर्यपर्यन्तं गमनं तूर्ध्वागतिः पुण्यगतिः कथ्यते। सा प्रकाशमयत्त्वाच्छुक्ला गतिः। ताभ्यामन्यतरया गत्या गत्वा अधोलोके ऊर्ध्वलोके वा दुःखं सुखं वा भुक्त्वा क्षीणे पापे क्षीणे पुण्ये वा पुनरिमं मृत्युलोकमभिजायन्ते। सैषा कर्मगति र्नाम।

## अध्यात्मं पञ्चाक्षरपुरुषोपसंहारः

इत्थञ्च ब्रह्मा, विष्णुः, इन्द्रः, सोम, अग्निरित्येते पंचाक्षरा अध्यात्मं जीवशरीरेऽनुवर्त्तमाना शान्तात्मा, महानात्मा, विज्ञानात्मा, भूतात्मा इत्येवं पंचभिरात्मभिरुप-

व्याख्याता भवन्ति। एषां च पञ्चाक्षराणामालम्बनभूतः शरीरस्थोऽव्ययपुरुषो विरजा इत्युच्यते। तथा चाह भगवानैतरेयः—

"यदक्षरं पञ्चविधं समेति युजो युक्ता अभि यत् संवहन्ति।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकी भवन्ति॥"

(ऐ० आ० २ आ० ३ अ० ८ खं०) इति।

"हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद् यदात्मविदो विदुः" इति च।

## अव्ययधातूनामध्यात्मं विनियोगः

आनन्दः, विज्ञानम्, मनः, प्राणः, वाग्, इत्येवं या अव्ययस्य पञ्चभक्तयो व्याख्याताः, स एवैषां सर्वेषामक्षरपुरुषाणां क्षरपुरुषकार्याणां विकारसंघानां च यथायथमालम्बनं भवति। तत्र स विकारसंघः क्षरपुरुषस्तावद्-अव्ययस्य वाग्धातुं प्राधान्येनावलम्बते। अक्षरपुरुषास्तु सर्वेऽव्ययस्य प्राणधातुम्, तत्रापि शान्तात्मा, महानात्मा, विज्ञानात्मा चेत्यात्मनस्त्रयोऽव्ययस्य विज्ञानधातुं विशिष्यावलम्बन्ते। प्रज्ञानात्मा प्राणधातुम्, भूतात्मा तु वाग्धातुमिति भवति कश्चिद्विशेषः। भूतात्मस्वपि शरीरात्मा वाग्धातुम्, हंसात्मा प्राणधातुम्, कर्मात्मा तु मनोधातुं विशिष्यावलम्बते-इति विशेषः। कर्मात्मस्वपि वैश्वानरो वाग्धातुम्, तैजसः प्राणधातुम्, प्राज्ञः पुनरेष मनोधातुमवलम्बते।

यद्यपि सर्वेऽप्येतेऽक्षरपुरुषाः क्षरपुरुषा वा अव्ययस्यैकं मनोधातुमेवावलम्बन्ते, तथापि कार्योपधानकाले स्व स्वानुकूलं भिन्नं भिन्नं धातुमेवावलम्ब्य जगतः सृष्टिं मुक्तिं वा संभावयन्तीति भाव्यम्। तत्रापि सृष्टिं कुर्वन्तो मुख्यतया मनोमयप्राणगर्भितां वाचमाश्रयते, सहकारिविधया तु विज्ञानं चानन्दं च गृह्णाति। अथ मुक्तिमपेक्षमाणा मुख्यतया आन्दमयविज्ञानगर्भितं मनः समाश्रयते, सहकारिविधया तु प्राणं च वाचं च गृह्णातीति विशेषः॥

## अव्ययकलानामध्यात्मं पञ्चकोशत्वम्

अत एवैतस्याऽव्ययपुरुषस्यैताः पञ्चभक्तयः पञ्चकोशा उच्यन्ते—अन्नमयकोषः, प्राणमयकोषः, मनोमयकोषः, विज्ञानमयकोषः, आनन्दमयकोषः, इति तैत्तिरीयके प्रपञ्चितम्।

यद्यपि "हिरण्मये परे कोशे विरजं ब्रह्म निष्कलमि" त्यादावनात्मनोऽवरब्रह्मणः कोशत्वमाख्याय तत्रात्मनः परब्रह्मणो निधेरयत्नत्वमाख्यातम्। तदनुसारेण प्रकृतेऽपि शङ्कराचार्यप्रभृतयो दार्शनिका अन्नप्राणमनःप्रभृतीनां पूर्वपूर्वेषामनात्मत्त्वमपरब्रह्मत्त्वं चापेक्ष्योत्तरोत्तराणां निधेरयत्नत्वमपेक्षन्ते-अन्नमये प्राणमयः, तत्र मनोमयः, तत्र विज्ञानमयः, तत्रानन्दमय इति। अथैतस्मिन्नप्यानन्दमये कोशेऽन्तर्निहितं किञ्चिदन्यं विशुद्धमानन्दमात्रं परब्रह्माऽचक्षते। तैत्तिरीयोपनिषद्यपि च तथैव चापाततः स्वरसो लभ्यते। तथापीदं मतमश्रद्धेयमिति ब्रूमः—

"मया ततमिदं सर्वं जगदव्यक्तमूर्तिना।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः॥
यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान्।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय॥
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम्।
पुरुषः स परः पार्थ! भक्त्या लभ्यस्त्वनन्यया॥
ये चैव सात्विका भावा राजसास्तामसाश्च ये।
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि॥"

इत्येवमनेकधा भगवद्गीतोपनिषदादौ भूतानामवरब्रह्मणामव्ययपुरुषनिधेयत्त्वमाख्याय तस्याव्ययपुरुषस्य सर्वालम्बनत्वाख्यानात् पञ्चानामप्येषां कोशानां सर्वजगद्विकारालम्बनत्त्वेन परब्रह्मत्त्वावगमात्।

"एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्।
एतदालम्बनं ज्ञात्वा यो यदिच्छति तस्य तत्"

इति श्रुत्या परमात्मनः सर्वाधारत्त्वावगमाच्च। अव्ययपुरुषस्य तु स्वजन्यभूतवर्गनिधेयत्वं स्पष्टशब्देन प्रत्याख्यातम्। तस्मादव्ययपुरुषस्यैव परब्रह्मणः सर्वालम्बनत्वात् तद्भक्तीनां वाङ्मनःप्राणप्रभृतीनां कोशत्वमाख्यातुं युज्यते। तैत्तिरीयोपनिषदुक्तस्तेषां कोशानामन्तरान्तरीभावः सूक्ष्मत्वाभिप्रायो द्रष्टव्यो न त्वाधाराधेयभावनिबन्धनः स उपपद्यते। वस्तुतस्तु स एक एवायमव्ययः सर्वेषामक्षरक्षरादीनामालम्बनत्वात् कोशभूत-आसीन्। स एकोऽहं बहुस्यामितीच्छा-तपः श्रमयोगादेकस्यैव विवर्तरूपेणानेकधात्वं प्राप्तास्ताएता वाक्प्राणमनोविज्ञानानन्दलक्षणा अव्य-

यभक्तयः सर्वजगदर्थानां नामरूपकर्मादीनां कोशभूताः सन्तीत्यवगतव्यम् ।
तदित्थं सर्वालम्बनभूतोऽयमव्ययपुरुषो व्याख्यातः।

## अध्यात्मं पुरुषत्रयनिर्वचनोपसंहारः

तानेतांस्त्रीनपि पुरुषान् भगवानुपस्तौति—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात् क्षरमतीतोऽमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥
अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥
नाहं प्रकाशः सर्वस्य योगमाया समावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥
त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥

श्रुतिरप्याह—

"पुरुष एवेदं सर्वं यद् भूतं यच्चभाव्यम्"—इति ।

इति आध्यात्मिकोद्द्योतश्चतुर्थः प्रकाशः ।

## चतुष्पाद्ब्रह्मणः प्रथमद्वितीयपादयोरध्यात्मनिर्वचनानन्तरं तृतीयपादस्य परात्परस्य निरुक्तिः ।

ब्रह्मणश्चतुर्षु पादेषु भूतग्रामरूपं पुरमात्मग्रामरूपः पुरुषश्चेति द्वौ पादौ व्याख्यातौ । अथ तृतीयपादः परात्परो नाम व्याख्यायते । उक्तं पूर्वं क्षरपुरुषोऽवरब्रह्म । अक्षरपुरुषः परावरब्रह्म । अव्ययपुरुषःपरब्रह्म । अथैतस्मात् परतोऽव्ययात्परं किञ्चिदन्यद् ब्रह्म भवतीति कृत्वा तद् ब्रह्म परात्परमित्युच्यते । परत्वमभिव्यापकत्त्वम् । सर्वान् स्ववि-

कारसंघान् क्षरपुरुषोऽभिव्याप्नोति। क्षरपुरुषानक्षरपुरुषः। अक्षरपुरुषांश्च पुरुषेषूत्तमोऽव्ययपुरुषोऽभिव्याप्नोतीति स परपुरुष इत्युच्यते। यस्तु तमपि पुरुषमभिव्याप्नोति स परात्परो नाम। पुरुषोत्तमो हि अक्षरपुरुषापेक्षया व्यापकोऽपि मायबलवैशिष्ट्यान्मितो भूत्वा दिग्देशकालसंख्याभिः परिच्छेदकधर्मैरवच्छिद्यते। किन्तु यत्र रसे तादृशान्यनन्तानि मायाबलान्युपलभ्यन्ते, स रसस्तस्य रसस्यानन्त्यात् सत्यपि मायाबले परिच्छेत्तुं न शक्यते। यथा चित्रपटे परिच्छिन्नाऽनेकविधरूपमयचित्रसत्वादेकेन केनचित् परिच्छिन्नेन चित्ररूपेण परिच्छिन्नस्य पटदेशस्य तच्चित्ररूपावच्छेदेन परिच्छेदसम्भवेऽपि तावता परिच्छेदेन सर्वविधचित्रमयस्य पटस्य परिच्छिन्नत्वं वक्तुं नोपपद्यते। तस्मादेषु परात्परो नाम रसो दिग्देशकालाद्यनवच्छिन्नत्वादनन्तोऽसीमः प्रतिपद्यते।

"न तस्य प्रतिमाऽस्ति यस्य नाम महद्यशः।"

इत्यादिभिः श्रुतिभिरेष एव परात्पर आत्मा परिष्टूयते। तत्राऽसीमत्वादेवाऽस्याप्रतिमत्वं भवति। "एकमेवाऽद्वितीयं ब्रह्म" इत्यादिभिः श्रुतिभिरपीदमेव परात्परं परिष्टूयते। अधिदैवतमध्यात्ममधिभूतमित्यधिकरणभेदेनाव्ययपुरुषाणां मायाबलवैशिष्ट्यात् परिच्छिन्नशरीराणां नानात्वोपपत्तावप्यस्य परात्परस्य दिग्देशकालानवच्छिन्नत्वादद्वितीयसर्वैकत्वोपपत्तेः॥

## "परात्परपुरुषयोर्वैधर्म्यनिरुक्ति"

अपरिच्छिन्नत्वादेव च नायं परात्परः पुरुष इत्युच्यते। पुरवासितया पुरावच्छेदेन पुरुषाणां परिच्छिन्नत्वात्। परात्परस्य तु पुरानभिमानिनोऽनवच्छिन्नतया पुरुषत्वाऽसम्भवात्। ननु परात्परस्य पुरुषाद्भिन्नत्वे अभ्युपगम्यमाने श्रुतिविरोधः प्राप्नोति—

"यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्।"

इति श्रुतौ पुरुषस्यापि परात्परत्वम्, परात्परस्यापि वा पुरुषत्वमाख्यायते। युक्तञ्चैतत्पुरुषस्यैव परात्परत्वम्। पुरुषेभ्यः परात्परस्य भिन्नत्वाभ्युपपत्तौ तु 'पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम्' इति मन्त्रश्रुतिर्व्याकुप्येत, इति चेन्न। "परात्परं पु-

रुषमुपैति दिव्यम्" इति श्रुतेरर्थानवगमात् । तत्र हि द्विविधः स परः पुरुषोऽभिप्रेयते । तथा हि तत्र—

"गताः कलाः पञ्चदश प्रतिष्ठां देवाश्च सर्वे प्रतिदेवतासु ।
कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥"

इति पूर्वेण श्रुतिवाक्येधेन जीवशरीरगतानां सर्वविधविकाराणां तत्कारणे क्षरपुरुषे तस्याप्यक्षरपुरुषे तस्याप्यव्ययपुरुषे क्रमेण विलयनं प्रतिपाद्यते । एवमेकीभूतस्य जीवशरीरस्थस्य परस्याव्ययस्य पुनरीश्वरशरीरस्थे महाव्यये सायुज्यमाख्यायते । ईश्वरशरीरस्थाव्ययपुरुषापेक्षया जीवशरीरस्थाऽव्ययपुरुषस्य पञ्चदशकलादिनानाविधक्षुद्रधर्मसंयोगात् स्वल्पमात्रोपपत्त्या कथञ्चिद् भेदोपपत्तावपि तेषां पञ्चदशकलादिसर्वविधक्षुद्रधर्माणां व्यपगमे भेदोपाधिराहित्यादस्य जीवाव्ययस्येश्वराव्ययेनैकत्वं स्वत एवोपपद्यते । सोऽयमेवार्थोऽनया श्रुत्या प्रतिपाद्यते । नामरूपाद्विमुक्तो विद्वान् प्रथमं परेऽव्यये सर्वैकीभावात् पराव्ययमात्रो भवति । तेन तया श्रुत्या पुरुषस्य परात्परत्वं परात्परस्य वा पुरुषत्वं नाक्षेप्तुं शक्यते । तथा चासीमत्वससीमत्वाभ्यां पुरुषपरात्परयोर्भेदः प्रतिपत्तव्यः ।

मायाबलरूपोपाधिविगमे तु परात्परपुरुषयोरपि भेदो नास्तीत्यर्थे "एकमेवाद्वितीयं ब्रह्म" 'नेह नानास्ति किञ्चन' इत्याद्यद्वैतश्रुतीनां तात्पर्यं स्यादित्यन्यत् । अस्य भेदोपपादकशास्त्रस्य व्यावहारिकावस्थोपपादकतयाऽद्वैतश्रुतीनां तु पारमार्थिकभावोपपादकतया तयोः प्रकरणयोर्विषयभेदादविरोधः सिद्धः ।

## पुरुषस्य चितिसम्बन्धात् सृष्टिहेतुत्वम्

परात्परस्य पुरुषस्य च सर्वविधबलवैशिष्ट्यसाम्येऽपि पुरुषे तावच्चितिसम्बन्धेन सर्वविधबलानि परस्परतः सम्बध्नन्ति । चयनाच्च बलसम्पन्नं रूपं जगत्सृष्टिमधिकुरुते । चितिरेव हि सृष्टिः । एकस्य बलस्य अन्यबलोपरि चयनाद् यस्तयोः संसर्गः परस्परसम्बन्धनात्मकः स एव बन्धो बलसंसृष्ट्यात्मकत्वात् संसृष्टिरित्युच्यते । तत्र हि सृष्टौ कचिद्बलानां हृदयेऽन्योन्यबन्धनं ग्रन्थिरूपं जायते । स हृदयग्रन्थिर्हृद्ग्रन्थिरित्युच्यते । हृद्ग्रन्थिसम्पादनमेव चयनमित्युच्यते । बले बलचयनेन यो हृद्ग्रन्थिस्तेन बलानां परस्परबन्धात् परस्परापसृष्ट्योर्यदपूर्वमेकं रूपं सम्पद्यते सा सृष्टिः ।

तदेवरूपं विश्वं जगन्नामाख्यायते। सर्वे हीमे परिदृश्यमाना विकारसंघा बहूनां बलानां बन्धरूपाः सृष्टयो द्रष्टव्याः।

## सृष्टिप्रतिसृष्टिकारणबलनिरुक्तिः

द्विविधानीमानि बलानि-संसर्जकान्यन्यानि, व्यवच्छेदकानि चान्यानि। तत्र संसर्जकबलानामुदये स्वभावत एवैतानि बलानि परस्परतः संस्रष्टुमुपक्रमन्ते। उत्तरोत्तरमधिकाधिकं च संसृज्यमानानि बलानि पुनर्ग्रन्थिं पुनरन्यं ग्रन्थिमुत्पाद्योपाद्य क्रमेण सूक्ष्मात्स्थूलं स्थूलं रूपं जनयन्तीति सृष्टिक्रमो भवति। अथैतस्मिन्नेव बन्धे व्यवच्छेदकबलोदयात् क्रमेण तेषां बलानामुद्ग्रन्धनं जायते। हृद्ग्रन्थिविभेदनाद्बलबन्धविमोक्षः। ततश्च सृष्टिविच्छेदः। इत्येवं प्रतिसंचरोपपत्तौ क्रमेण स्थूलात्सूक्ष्मं सूक्ष्मं रूपं संपद्यते। सैषा प्रतिसृष्टिर्द्विविधा संपद्यते—नित्या साध्या च। स्वत एव प्रकृत्या जायमाना नित्या। तत्र कदाचिदवश्यमेषां सर्वेषां सृष्टिरूपाणामुद्ग्रन्धनान्मोक्षो भवतीति मन्यामहे। किन्तु नैतावता सृष्टिविच्छेदः संभाव्यते। आसां सृष्टीनामुद्ग्रन्धनेऽपि तत्कालमेवान्येषां बलानां प्रकृत्यैवोदयसंभवात् सृष्टिक्रमस्य धारावाहिकतया प्रवाहरूपेण नित्यत्वात्। यथा खल्वयुतवर्षेभ्यः प्रागुत्पन्नानां पृथिवीपृष्ठे यत्र तत्र प्रतिष्ठितानां वृक्षविशेषाणामिदानीं काले कुत्रापि स्थितिर्नास्ति। तथाप्यस्मिन् कालेऽपि पृथिवीपृष्ठे यत्र तत्रैतेऽसंख्या वृक्षविशेषा न न सन्ति—निर्मलमुत्सन्नानामपि तेषां प्रातिनिध्येनान्येषामन्येषां वृक्षाणां यत्र तत्र पुनरुत्पन्नत्वात्। एवमेव ये यावन्तो वृक्षा इदानीं काले यत्र तत्रोपलभ्यन्ते, सर्वऽप्येतेऽयुतवर्षोत्तरमुत्सन्नाः सन्तः क्वचिदपि न स्थास्यन्तीति मन्यामहे। किन्तु तदानीमप्यन्येऽन्ये वृक्षा उत्पद्य प्राग्वत् पृथिव्यामवश्यं स्थास्यन्तीति विश्वसिमः। दृष्टान्तोऽयं सृष्टिपरिवर्तनवन्मोक्षस्याप्युपपादको द्रष्टव्यः। परःसहस्राब्देभ्यः प्राक्कालिका बलानां बन्धाः सर्वेऽप्युद्ग्रन्धनाद्विमुक्ताः प्रत्येतव्याः। अपरेचापरे च बलानां बन्धा इदानीं सृष्टिहेतवो विद्यन्ते। तेषामपिकदाचिन्मुक्तिर्भविष्यति। अपरे च बन्धा उत्पत्स्यन्ते। इत्येष बन्धविमुक्तिक्रमो धारावाहिकप्रवाहेऽस्मिन्संसारेऽनुवर्तमानो द्रष्टव्यः। स एष प्रतिसृष्टौ मुक्तिक्रमो नित्यः प्राकृतिकत्वात्। एवमेव स कृत्रिमोऽपि संपाद्यते। तत्र कर्मैकान्तनिवृत्त्या निष्कामकर्मणा वा प्रवर्तमानो विद्वान् विशुद्धात्मज्ञानेन सर्वविधानि सुकृतदुष्कृतानि कर्माणि निस्तीर्य विमुक्तो भवतीति ज्ञानिनः प्रतिजानते। तथा चेत्थं द्विविधा बन्धमुक्तिर्भवतीति सिद्धम्। इत्थं द्विविधोऽपि प्रतिसृष्टिक्रमः सृष्टिक्रमो वा रसे बलानामन्यान्यचयनात्संपद्यत इति बोध्यम्।

## आत्मनि मुक्तिकाले कर्मात्यन्तनिवृत्तिमतखण्डनम्

स चैष रसे बलानां चितिसबन्धात् सिद्धो भावः पुरुष इत्युच्यते। यत्र तु बलानां चयनं नास्ति किन्तु सहचरभावेन सर्वाण्यपि बलानि रसे क्वचिद् उत्थायोत्थाय प्रतितिष्ठन्ति वितिष्ठन्ते वा स एव बलविशिष्टो रसः परात्पर इत्युच्यते। एष च सहचरभावेन बलानामन्योन्यसंबन्धो मुक्तिकालेऽपि द्रष्टव्यः। यत्तु कृत्स्नकर्मविप्रमोक्षो मोक्ष इति शङ्कराचार्योमास्वामिप्रभृतयो दार्शनिकाः प्रतिजानते, तदेतदश्रद्धेयं मन्यामहे। आत्मनोऽव्ययस्य विद्याकर्मोभयरूपतया ज्ञानकर्मात्यन्तनिवृत्तेरवैज्ञानिकत्त्वात्। अथवा तेषां हृद्ग्रन्थिबन्धनौपयिकचितिसंबन्धापगमे एव तात्पर्यमस्तीत्यध्यवसेयम्। नित्योत्पन्नविनष्टक्रमरूपाणां बलानां प्रवाहनित्यतया अभ्युपगम्यमानत्वात्। न हि रसोऽयमन्तरेण बलानि कदाचिदुपपद्यते। उभयोरप्यनयोः सदसतोरमृतमृत्युसंज्ञयो रसबलयोः परस्परेणाविनाभूतत्वात्। तस्माद् हृद्ग्रन्थिभेदनाद्बलबन्धमोक्ष एव मोक्षः प्रतिपत्तव्यः। तत्र हि मोक्षे चितिसंबन्ध एव बलानां निषिध्यते। सहचरभावेनावस्थानं तु बलानां न कदाचिदपि प्रत्याख्यायते। तदित्थं चितिसंबन्धेन संबन्धिनां बलानां वैशिष्ट्येन यथा पुरुषरूपं संभवति, तथा स हचरभावेन सम्बन्धिनां बलानां वैशिष्ट्यात् परात्परं नामेदमपरं रूपं भवतीति सिद्धम्। तस्य च परात्परस्य उपलक्षकाणि बलानि चितिसंबद्धेन संबद्धानि न सन्तीत्यत एवास्य परात्परस्य सृष्टौ नाधिकारः। अव्ययं पुरुषमारभ्यैव सृष्टेः प्रक्रममाणत्वात्।

## ब्रह्मपादचतुष्टये द्वाभ्यां द्वाभ्यां संसारनिस्तारयोर्व्यवस्था

चतुष्पाद् ब्रह्मणः पुरं च पुरुषश्चेति द्वावेव पादौ जगदुच्यते। तत्र हि संसारो भवति। संसारान्निस्तारे तु अपरौ द्वौ पादौ परात्पर-निर्विशेषरूपौ विश्वस्माद्बहिर्भूतौ प्रत्येतव्यौ। तत्रायं तावत्परात्परो व्याख्यातः।

"ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च॥" (गी० १४।२७)

ईश्वराव्ययवचनोऽयमत्राहंशब्दः। चराचरस्थानास्तु चत्वारः पादाः षष्ठ्या निर्दिष्टाः। तत्रापि शाश्वतो धर्मः परात्परः। ऐकाऽन्तिकोऽयमानन्दो निर्विशेषः।

## अथ निर्विशेषनिरुक्तिः

अथ निर्विशेषो व्याख्यायते। बलविशिष्टो हि रसः परात्परशब्देनाऽख्यातः। तत्रैतानि बलानि कस्मिंश्चिद् एकस्मिन् रसे उत्थायोत्थाय प्रतितिष्ठन्ति वितिष्ठन्ते चेत्युक्तम्। तत्रैतानि बलानि खण्डखण्डान्यनन्तानि भवन्ति। न चैतानि रसमन्तरेणात्मानं लभन्ते। अतएवैषां बलानां प्रभवः, प्रतिष्ठा, परायणं चैष रसो बलोपहितरूपो बलात्पृथक्त्वेनाभ्युपगम्यमानो निर्विशेष इत्युच्यते। यद्यपि न रसः कदाचिदप्यनेन बलेन निराकृतो भवति, बलस्यायुतसिद्धत्वात्। तथापि बुद्ध्या बलात् पृथक्त्वेन

शक्यते ग्रहीतुमिति । तस्य स्वरूपमात्रेण सतः सर्वविशेषशून्यस्य निर्विशेषत्वमाचक्षते । स यथा परात्परः सर्वकर्मा, सर्वधर्मा, सर्वरसः, सर्वगन्धः, सर्वगुणः, सर्वशक्तिमांश्चोपपद्यते । तथायं तद्वैपरीत्येन निष्कर्मकः, निर्धर्मकः, नीरसः, निर्गन्धः, निर्गुणः, निरञ्जनः, अदृश्यः, अग्राह्यः, नेति नेतीति कृत्वा प्रत्येतव्यः । यत्किञ्चित्पदार्थतावच्छेदकावच्छिन्ने पदानां शक्तिर्भवतीति कृत्वा नैकोऽपि शब्दो निर्धर्मकं रसं वक्तुं क्षमते, निर्धर्मके तस्य शक्त्यलाभात् । अत एव सर्वविशेषशून्योऽयं निर्विशेषोऽनिर्वचनीय उच्यते । सत्तामात्रेण सामान्यतो ज्ञायमानोऽपि सर्वविशेषशून्यतया विशेषरूपेण ज्ञातुं न शक्यते । इत्यत एवास्य निर्विशेषरसस्याविज्ञेयत्त्वमप्याचक्षते । तथा चाहुर्भगवन्तो महर्षयः—

संविदन्ति न यं वेदा विष्णुर्वेद न वा विधिः ।<br>
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ॥१॥<br>
यस्यामतं तस्य मतं मतं यस्य न वेद सः ।<br>
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥२॥<br>
नाहं मन्ये सुवेदेति नो न वेदेति वेद च ।<br>
यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥३॥ इति ।

यस्तावदस्मिन् विश्वस्मिन् जगति ज्ञातव्यस्य परमसीमा भवति स परात्परो नाम। "यज्ज्ञात्वा नेह भूयोऽन्यज् ज्ञातव्य मवशिष्यते" तमेव विदित्वा विदितवेदितव्या भवन्ति। सर्वविधकल्याणमाप्नुवन्ति । निःश्रेयसमधिगच्छन्ति, तस्मादप्ययमूर्ध्वो निर्विशेषोऽयमानन्दमात्रो रसः स नात्यन्तं विशेषतो विज्ञातुं शक्यते तस्माद् विरम्यते। तदित्थं निर्विशेषः, परात्परः, पुरुषः, पुरम्—इति चतुष्पाद्ब्रह्म व्याख्यातम् ।

## इति विश्वातीतोद्घोतः पञ्चमः प्रकाशः

## ॥ ग्रन्थोपसंहारः ॥

विज्ञानविद्युद् विद्योता ह्यद्यो जलधरे स्फुरन् ।<br>
वेदमार्गस्थान्धकारं निराकुर्यान्निरन्तरम् ॥<br>
इयं दृगवसुगो चन्द्रमिते विक्रमवत्सरे । (सं० १९८२)<br>
विद्युदाविरभूदेषा वेदमार्गप्रदर्शिका ॥

## इति श्रीमधुसूदनविद्यावाचस्पतिप्रणीता ब्रह्मविज्ञानप्रकाशिका "विज्ञानविद्युत्" सम्पूर्णा ।

# शुद्धि-पत्रम्

| अशुद्धपाठः | पृ० | पं० | शुद्धपाठः |
|---|---|---|---|
| दुद्योतः | १ | ४ | दुद्द्योतः। |
| औपजातिकाश्चेति | १ | १३ | औपजनिकाश्चेति। |
| विकाराणां संघः-शरीरमित्युच्यते | १ | २० | विकाराणां संघः ईश्वरपुरुषापेक्षया विश्वमित्युच्यते। जीवपुरुषापेक्षया तु शरीरमित्युच्यते। |
| तच्च शरीरम्। (इससे पहले) | २ | १ | तत्रेदं विश्वं त्रिधा विभक्तम्–आधिदैविकम्, आधिभौतिकम्, आध्यात्मिकं चेति। अथेदं शरीरं त्रिधा विभक्तम्–कारणशरीरम्, सूक्ष्मशरीरम्, स्थूलशरीरं चेति। तच्च विश्वम्। (यह पाठ लिखो)। |
| निमितेऽव्ययपुरुषे | २ | १५ | निमितेऽस्मिन्नव्ययपुरुषे। |
| चतुष्टयोद्योतः | ३ | १४ | चतुष्टयोद्द्योतः। |
| पृथिव्युपलानि | ३ | २२ | पृथिव्युत्पन्नानि। |
| पृष्ठमै | ४ | ८ | पृष्ठयौ। यत्रैते पंचाक्षराः स एकः। |
| हृद्याक्षरत्रयविमर्शः | ४ | ६ | हृद्याक्षरत्रयपृष्ठ्योक्षरद्वयविमर्शः। |
| हृद्यात्ररत्रये | ४ | १० | हृद्याक्षरत्रये। |
| प्रतिष्ठातः | ४ | ११ | तेषु प्रतिष्ठातः। |
| मुक्षिप्तेऽपि | ४ | १८ | मुत्क्षिप्तेऽपि। |
| एवो क्षेपण | ४ | १८ | एवोत्क्षेपण। |
| दीपार्चिभवति | ४ | २४ | दीपार्चिर्भवति। |
| त्रिभ्याऽक्षभ्यः | ५ | ६ | त्रिभ्योऽक्षरेभ्यः। |

| अशुद्धपाठः | पृ० | पं० | शुद्धपाठः |
|---|---|---|---|
| परिवर्तन | ५ | ८ | परिवर्त्तन । |
| द्रष्टव्वाः | ५ | ११ | द्रष्टव्याः । |
| रग्नि गेमयोः | ५ | १३ | रग्निसोमयोः । |
| आक र्ण | ५ | १३ | आकर्षण । |
| इन्द्रशिववो | ५ | १५ | इन्द्रशिवयोः । |
| देवतत्त्वेन | ५ | १५ | दैवतत्त्वेन |
| वैविध्योपत्ति | ५ | १७ | त्रैविध्योपपत्ति । |
| उपसं हियते | ५ | २१ | उपसंह्रियते । |
| सर्वमिद | ५ | २० | सर्वमिदं । |
| विष्णिवद्रौ | ५ | २२ | विष्णिवन्द्रौ । |
| त्रिशास्तोमान्तः | ६ | ६ | त्रिंशास्तोमान्तः । |
| तत्थि | ६ | २६ | त्तदित्थ । |
| तत्रापि अग्निमयभागे | ७ | ५ | तत्रापि तस्य चैतस्य यज्ञस्यैतस्मिन्नग्निमय-भागे । |
| त्रिवृत | ७ | ६ | त्रिवृत् |
| त्रिशौ | ७ | ६ | त्रिंश्यौ । |
| साम | ७ | १५ | सोमः । |
| ऋगूपम् | ७ | १२ | ऋग्रूपम् । |
| जू नामः | ८ | ४ | जूर्नाम । |
| व्राह्मणे | ८ | ११ | व्राह्मणे । |
| सर्वस्य प्रतिष्ठा | ८ | १४ | सर्वस्य प्रतिष्ठा त्रैविद्यं ब्रह्म । |

| अशुद्धपाठः | पृ० | पं० | शुद्धपाठः |
|---|---|---|---|
| त्रय्यां वाव प्रतिष्ठितानि | ८ | १५ | त्रय्यां वाव विद्यायां प्रतिष्ठितानि। |
| प्राणान्न | ८ | २० | प्राणोऽन्न। |
| सदर्क | ८ | २२ | सदृक्। |
| अनुवर्तनानो | ९ | १ | अनुवर्त्तमानो। |
| अन्नोर्क | ९ | १ | अन्नोर्क्। |
| ब्रह्मणे | ९ | २ | ब्रह्मणि। |
| विष्णुनामाऽख्यायते | ९ | ३ | विष्णुर्नामाख्यायते। |
| यायद्यं | ९ | ४ | यावदयं। |
| रिन्द्रयै | ९ | १३ | रिन्द्रियैः। |
| व्याक्य | ९ | १२ | व्याप्य। |
| स विविधभुवनं च | ९ | १५ | स त्रिविधः-सप्तभुवनरूपः, त्रिभुवनरूपः। |
| जीवलोकः | ९ | २० | अपिचाहुः—जीवलोकः। |
| न्येषानेवा | ९ | १९ | न्येषामेवा। |
| कस्मिंश्चिदे भावे | ९ | १९ | कस्मिंश्चिदेव भावे। |
| सूर्य्यज्योतिरूपे | ९ | २५ | सूर्य्यज्योतीरूपे। |
| भावा | ९ | २६ | भाव। |
| भेदाच्चेतस्य | १० | २ | भेदाच्चैतस्य। |
| यायन्ति | १० | ४ | यावन्ति। |
| भावाः—४— | १० | ६ | भावः—४। |
| गौरववहीना | १० | १० | गौरवहीना। |

| अशुद्धपाठः | पृ० | पं० | शुद्धपाठः |
|---|---|---|---|
| समर्य्यादीनि | १० | १६ | समर्य्यादानि । |
| चतुर्भिर्धर्म्मैः | १० | २७ | चतुर्भिर्धर्म्मैः । |
| एकस्मा | ११ | १ | एतस्मा । |
| चत्त्वारो | ११ | २ | पञ्च । |
| अव्यपुरुष | ११ | ४ | अव्ययपुरुष । |
| निषिध्येते | ११ | ७ | निषिध्यते । |
| काये | ११ | ११ | कार्ये । |
| दृष्टि कार्य्योपधांय | ११ | १३ | दृष्टिकार्य्योपधाय । |
| सामग्रया | ११ | १६ | सामग्रयाः । |
| मत्वलानां | १२ | १७ | मद् बलानां । |
| रूप | १२ | २५ | रूपं । |
| मुद्बन्धनं | १३ | २ | मुद् बन्धनं । |
| बल | १३ | ५ | बलं । |
| दत्यये | १३ | ७ | दव्यये । |
| निरानन्द | १३ | १० | निरानन्दे । |
| इत्थ | १३ | १४ | इत्थं । |
| अव्यस्या | १४ | १ | अव्ययस्या । |
| स्वमायांयाबलेन | १४ | ५ | स्वमायाबलेन । |
| | | | सोऽयं महेश्वरो नामैकः प्रथमः प्रजापतिः । (६ वीं पंक्तिमें यह पाठ लिखना चाहिये) |
| सहितायां | १५ | १ | संहितायां । |

| अशुद्धपाठः | पृ० | पं० | शुद्धपाठः |
|---|---|---|---|
| कतरश्च नैनोः | १५ | ५ | कतरश्चनैनोः। |
| बह्वयो | १५ | १२ | बह्वयो। |
| सत्यस्येदममृतं | १५ | २४ | सत्यस्येदमृतं। |
| चन्द्रराशिस्था | १६ | १० | चन्द्ररश्मिस्था। |
| एवात्पल्यो | १६ | १३ | एवात्यल्पो। |
| भावोऽवागव | १६ | १३ | भावोऽर्वागव। |
| प्राणा | १६ | १८ | प्राणाः। |
| संयोगच्छेदा | १६ | १८ | संयोगविच्छेदा। |
| आहूतिं | १६ | २१ | आहुतिं। |
| भगयन्त | १७ | ८ | भगवन्त। |
| ब्रह्मणस्पतिना सहितो | १७ | ९ | ब्रह्मणस्पतिना च सहितो। |
| परिक्रमाणाः | १८ | १७ | परिक्रममाणाः। |
| निविडोऽयमेतं | १८ | २६ | निविडो यमेतं। |
| ज्योतिमयेन | १९ | १ | ज्योतिर्म्मयेन। |
| त्रैविध्यान् | १९ | १० | त्रैविध्यात्। |
| षड्विधाना | १९ | १८ | षड्विधाना। |
| गात्समदो | १९ | १९ | गार्त्समदो। |
| चास | १९ | २१ | चारु। |
| चिकेत्तत् | १९ | २७ | चिकेतत्। |
| त्रयो वा इमे लोकाः | २० | २ | त्रयो वा इमे त्रिवृतो लोकाः। |

| अशुद्धपाठ | पृ० | पं० | शुद्धपाठः |
|---|---|---|---|
| पृथिवीयग्नि | २० | ४ | पृथिवीयमग्नि । |
| परमेष्ठि | २० | ६ | परमेष्ठी । |
| अचिकित्वान् चिकितुष | २० | १२ | अचिकित्वाँश्चिकितुष । |
| एकाव्यपुरुषो | २० | १७ | एकाव्ययपुरुषो । |
| र्धत्ते | २० | २० | र्धीयते । |
| धत्ते | २० | २१ | र्धीयते । |
| चयश्रूते | २० | २३ | च श्रूयते । |
| पर र | २१ | १ | परम् । |
| दैविकोदद्योत | २१ | ४ | दैविकोद्द्योतः । |
| पाद | २१ | १२ | पादं । |
| मवृत्य | २१ | १३ | मावृत्य । |
| तमिञ्छरीरे | २२ | ६ | तस्मिञ्छरीरे । |
| मतिष्ठां | २२ | ७ | प्रतिष्ठां । |
| त्रपस्त्रिशाभ्यां | २२ | १७ | त्रयस्त्रिशाभ्याम् । |
| महात्मा | २२ | २१ | महानात्मा । |
| शरीरोपादकं | २३ | १३ | शरीरोपपादकम् । |
| अयात्म | २४ | ६ | अध्यात्मं । |
| मनीषा | २४ | २४ | र्मनीषा । |
| प्रज्ञेनात्मना | २४ | २८ | प्राज्ञेनात्मना । |
| विविधम् | २५ | २ | त्रिविधम् । |
| मिन्द्रियं | २५ | ३ | मनिन्द्रियं । |

| अशुद्धपाठः | पृ० | पं० | शुद्धपाठः |
|---|---|---|---|
| सुखदुख | २५ | ४ | सुखदुःख । |
| साहरणा | २५ | १७ | साहरणाद् । |
| समृद्धममृतम् (तै० उपनिषत्) इस के बाद | २६ | २ | तस्यैतस्याध्यात्मिकस्य चन्द्रमसोऽयं संचारो यादृच्छिको न तु दिव्यचन्द्रवन्नियतं काल इति विशेषः ॥ यह पाठ लिखो । |
| चरञ्जीवति | २६ | १४ | चिरञ्जीवति । |
| शरीराकृतिं | २६ | १६ | शरीराकृति । |
| भूरात्मा | २६ | २१ | भूतात्मा । |
| स्वे" त्याह | २६ | २५ | स्व" ——इत्याह । |
| पृथिव्या वो | २७ | ६ | पृथिव्यामेवो । |
| संपयन्ते | २७ | ७ | संपद्यन्ते । |
| तंन्त्रधरौ | २७ | १२ | तन्त्रधरौ । |
| परिवद्धयन् | २७ | १६ | परिवर्द्धयन् । |
| जीवेष्वा | २७ | २५ | जीवेष्वपि । |
| वैश्वानरादयन्तु | २८ | ५ | वैश्वानरादयस्तु । |
| व्याख्याता | २८ | १५ | व्याख्याता । |
| विज्ञानात्मा भूतात्मा | २८ | २६ | विज्ञानात्मा, प्रज्ञानात्मा, भूतात्मा । |
| चेत्यात्मनः | २६ | १२ | चेत्यात्मानः । |
| माश्रयते | २६ | १६ | माश्रयन्ते । |
| गृह्णाति | २६ | १६ | गृह्णन्ति । |

| अशुद्धपाठः | पृ० | पं० | शुद्धपाठः |
|---|---|---|---|
| समाश्रयते | २६ | २० | समाश्रयन्ते। |
| गृह्णातीति | २६ | २१ | गृह्णतीति। |
| निधेरयत्नत्व | ३० | २ | निधेयरत्नत्व। |
| किञ्चिदन्यं विशुद्धमानन्दमात्रं | ३० | ६ | किञ्चिदन्यं भावं विशुद्धमानन्दमात्रं। |
| निपद्यपि | ३० | ६ | निषद्यपि। |
| भावनिबन्धनः स | ३० | २५ | भावनिबन्धः, अथवा अन्नजनितमौलिकमर्त्यकोशाभिप्रायो वा स। |
| तपः श्रम | ३० | २६ | तपः श्रमयो। |
| मनोवज्ञानानन्द | ३० | २७ | मनोविज्ञानानन्द। |
| त्यवगतव्यम् | ३१ | १ | त्यवगन्तव्यम्। |
| तीतो ऽमसरादपि | ३१ | ६ | तीतोऽहमक्षरादपि। |
| परमव्यम् | ३१ | १६ | परमव्ययम्। |
| तस्मादेषु | ३२ | ६ | तथैतेषु रसेषु। |
| निरुक्ति | ३२ | १६ | निरुक्तिः। |
| युक्तञ्चेतत् | ३२ | २३ | युक्तञ्चैतत्। |
| परात्परत्वम्—पुरुषेभ्यः। | ३२ | २३ | परात्परत्वम्, ईश्वरपुरुषस्य सर्वेभ्यः परत्वोपपत्तेः॥ |
| अभिप्रेयते | ३३ | १ | अभिप्रेयते-जीवाव्ययः, ईश्वराव्ययश्चेति। |
| वाक्येधेन | ३३ | ४ | वाक्येन। |
| तस्यास्यव्ययपुरुषे | ३३ | ५ | तस्याप्यव्ययपुरुषे। |

| अशुद्धपाठः | पृ० | पं० | शुद्धपाठः |
| --- | --- | --- | --- |
| प्रथमं परेऽव्यये | ३३ | ११ | प्रथमं जैवे परेऽव्यये, पश्चादैश्वरे । |
| संबन्धनात्मकः | ३३ | २२ | संबन्धात्मकः । |
| परस्परापसृष्टयो | ३३ | २५ | परस्परोपसृष्टयो । |
| मुत्पाद्योपाद्य | ३४ | १ | मुत्पाद्योत्पाद्य । |
| निर्मल | ३४ | १६ | निर्मूल । |
| सर्वप्येते | ३४ | १८ | सर्वेऽप्येते । |
| तेत्थं | ३४ | २६ | चेत्थं । |
| एव | ३५ | ३ | एष । |
| र ह | ०५ | १४ | सह । |
| संबद्धेन | ३५ | १६ | संबन्धेन । |
| षष्ठया | ३५ | २४ | षष्ठी । |
| निर्गणः | ३६ | ४ | निर्गुणः । |
| घोतः | ३६ | २० | द्योतः । |



